...स्थान) निवासि-स्वामि-

लक्ष्मणशास्त्रिप्रणीतम्

(चित्रकाव्यम्, मूलमात्रम्)

वि० संवत्सरे २०१५ मिते मुद्रितम्

मूल्यं रूप्यकद्वयम्, २) प्रतयः, ५०० मिताः।

नागौर (राजस्थान) स्थित-

# संस्कृतविद्यालयस्य

अध्यक्षाः स्वामिनो लक्ष्मणशास्त्रिणः,

तदन्तेवासिनश्छात्राश्च ।

श्रीविष्णवे नमः ।

( ग्रन्थादौ मङ्गलश्लोकः । )

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं,
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं,
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥



श्रीमते रामानुजाय नमः ।



अथ

राजस्थानान्तर्गत-नागौरनगरनिवासि-स्वामि-लक्ष्मण-
शास्त्रिप्रणीतं-श्रीविष्णुचरितामृतं चित्रकाव्यं
प्रारभ्यते ।

# प्राक्कथनम् ।

अस्मिन् श्रीविष्णुचरितामृताख्ये चित्रकाव्ये श्रीमद्भागवतस्य द्वितीयस्कन्धगते सप्तमाध्याये निर्दिष्टान्येव श्रीविष्णोश्चतुर्विंशति-मितानामवताराणां सङ्ख्या, नाम, क्रमश्च सङ्क्षिप्तं तच्चरित्रं च सरलया संस्कृतभाषया वर्णितानि सन्ति । काव्येऽस्मिन् सप्तत्रिंशन्मिताः सर्गाः सन्ति । अस्मिन् काव्ये सर्वा श्लोकसङ्ख्या ८५६ मितास्ति । तत्र श्रीरामस्य चरित्रमष्टभिः सर्गैः, श्रीकृष्णस्य चरित्रं सप्तभिः सर्गैः, शेषाणां द्वाविंशतिमितानामवताराणां चरित्रमेकैकेन सर्गेण वर्णित-मस्ति । सर्गान्ते तत्तदवतारस्य नामनिर्देशोऽपि दर्शितः । काव्येऽत्र सर्वत्रानुष्टुब्वृत्तमेव निबद्धमस्ति । अस्मिन् चित्रकाव्ये कृष्णद्वैपायन-महर्षिणा सङ्कलिते श्रीमहाभारतआनुशासनिके पर्वणि सन्दर्भितं सप्ताधिकशतपद्यात्मकं श्रीविष्णुसहस्रनामस्तोत्रं श्लोकानां प्रतिचरण-गतेन चतुर्थाक्षरेण विनिःसृतं भवतीति कवे रचनाचातुर्यं काव्यस्य च महद्वैचित्र्यं विदुषामवश्यमेव द्रष्टव्यमस्ति । सत्यपि चित्रकाव्येऽस्य काव्यस्य संस्कृतपद्यभाषा सुतरां सरला मनोज्ञा चास्ति । विद्यार्थिनां श्रीविष्णुभक्तानां चेदं काव्यं नितरामुपयुक्तं पठनीयं चास्ति ।

प्रकाशकस्य ।

गुणेषु ये दोषदृशः परेषां,
ब्रूमः स्वदोषावरणाय किं तान् ।
स्वतः पिधास्यन्ति ममात्र दोषान्,
सन्तस्ततस्तानपि किं ब्रवीमि । १ ।

स्वामिलक्ष्मणशास्त्रिप्रणीतानां संस्कृतरत्नाकर, भारती, भवितव्य, दिव्यज्योतिः-प्रभृतिषु विश्रुतेषु संस्कृतपत्रेषु प्रकाशितानां गद्यलेखानां नामानि ।

परमात्मनि दृढो विश्वासस्तत्फलं च ।
ज्योतिःशास्त्रस्य चमत्कारः ।
( गर्भाधानसमयाज्जन्मसमयज्ञानम् )
दिव्यं लग्नघटीयन्त्रम् ।
राज्ञो मौर्ख्यं महानर्थमूलम् ।
महाकविः कालिदासः ।
उपरागाशौचपरामर्शः ।
क्षेपकपरामर्शः ।
अयनांशविमर्शः ।
संस्कृतभाषा, तत्प्रचारोपायाश्च ।
संस्कृतभाषाया वैशिष्ट्यम् ।
आवश्यकतैव भाषाया विकाशे
प्रमुखं कारणम् ।
विश्वभाषा ( संस्कृतम् )
सरलीकरणं विकली करणं वा ।
प्रश्नत्रयम् ( ज्योतिःशास्त्रविषये )
विद्वद्भूषणम् ।
दुरवस्थायाः परा काष्ठा ।
( संस्कृतभाषाविषये )
एकादश किङ्कराः ।
अन्धविश्वासः ।
यादृशी त्वं तादृशोऽहम् ।
परमेश्वरः ।
सत्सङ्गः ।

इत्यादीनि ।

# श्रीविष्णोरवताराणां विमर्शः।

श्रीविष्णोः कत्यवताराः सन्ति? कानि पुनस्तेषां नामानि? कथं च तेषां क्रमः? अयं विषयः सर्वथा दुरुत्तर एवास्ति खलु। शास्त्रेषु तेषां सङ्ख्या, नामानि, क्रमश्च तत्र तत्र नैकविधानि मिथोऽतितरां विरुद्धानि वर्णितान्युपलभ्यन्ते। अन्येषां शास्त्राणामेतद्विषये परस्परं विरुद्धोक्तिर्दूर आस्ताम्, एककर्तृके वैष्णवानामेकमात्रमान्ये च श्रीमद्भागवतेऽपि श्रीविष्णोरवतारवर्णनप्रसङ्गे तत्र तत्र सङ्ख्यायाम्, नामसु, क्रमे च सुतरां विसंवादो विद्यते।

श्रीमद्भागवते श्रीविष्णोरवतारवर्णनप्रसङ्गाश्चत्वारो विशेषतो विद्यन्ते। तेषु प्रथमः प्रसङ्गः श्रीमद्भागवतस्य प्रथमस्कन्धे द्वितीयाध्यायेऽस्ति। अत्र रोमहर्षणपुत्रेणोग्रश्रवसा सूतेन शौनकादिभ्यो मुनिभ्यः श्रीविष्णोरवताराणां वर्णनं कृतम्। अत्र सङ्ख्या, नामानि, क्रमश्चैवं सन्ति। कुमारः १, वराहः २, नारदः ३, नारायणः ४, कपिलः ५, दत्तः ६, यज्ञः ७, ऋषभः ८, पृथुः ९, मत्स्यः १०, कूर्मः ११, धन्वन्तरिः १२, मोहिनी १३, नरसिंहः १४, वामनः १५, परशुरामः १६, व्यासः १७, श्रीरामः १८, कृष्णः १९, बलरामः २० बुद्धः २१, कल्की २२,। अत्रादिमोऽवतारः कुमारोऽन्तिमश्च कल्क्यस्ति। अत्र विश्रुतान् ध्रुवहरिहयग्रीवमनुहंसाख्यान् पञ्चावतारान् विहाय नारदमोहिनीबलरामाख्यांस्त्रीनवतारानधिकान् सङ्गृह्य केवलं द्वाविंशतिमिता एवावताराः स्वीकृताः।

द्वितीयः प्रसङ्गः श्रीमद्भागवतस्य द्वितीयस्कन्धे सप्तमाध्यायेऽस्ति। अत्र ब्रह्मणा स्वपुत्राय नारदाय श्रीहरेरवतारा वर्णिताः। तेषां सङ्ख्या, नामानि, क्रमश्चैवं सन्ति। वराहः १, यज्ञः २, कपिलः ३, दत्तः ४, कुमारः ५, नारायणः ६, ध्रुववरदः ७, पृथुः ८, ऋषभः ९, हयग्रीवः १०, मत्स्यः ११, कूर्मः १२, नृसिंहः १३, हरिः १४, वामनः १५, हंसः १६, मनुः १७, धन्वन्तरिः १८, परशुरामः १९, श्रीरामः २०, कृष्णः २१, व्यासः २२, बुद्धः २३, कल्की २४,। अत्रादिमो वराहस्त्वन्तिमः कल्क्यस्ति। अत्र चतुर्विंशतिमिताः श्रीहरेरवतारा वर्णिताः। अयमेव पक्षः साधीयान् विशेषतश्च विश्रुतोऽस्ति।

तृतीयः प्रसङ्गः श्रीमद्भागवतस्य समग्रेऽष्टमस्कन्धे वर्णितोऽस्ति। अत्र महामुनिना श्रीशुकेन परीक्षिते राज्ञे चतुर्दशमितेषु मन्वन्तरेषु प्रतिमन्वन्तरमेकैकस्यावतारस्य वर्णनं कृतम्। अत्रावताराणां सङ्ख्या, नामानि, क्रमश्चैवं सन्ति। प्रथमे स्वायम्भुवान्तरे रुचेराकूत्यां यज्ञः १, द्वितीये स्वारोचिषान्तरे वेदशिरसस्तुषितायां विभुः २, तृतीय उत्तमान्तरे धर्मस्य सूनृतायां सत्यसेनः ३, चतुर्थे तामसान्तरे हरिमेधसो हरिण्यां हरिः ४, पञ्चमे रैवतान्तरे शुभ्रस्य विकुण्ठायां वैकुण्ठः ५, षष्ठे चाक्षुषान्तरे वैराजस्य सम्भूत्यामजितः ६, सप्तमे वैवस्वतान्तरे कश्यपाददित्यां वामनः ७, अष्टमे सावर्ण्यन्तरे देवगुह्यात् सरस्वत्यां सार्वभौमः ८, नवमे दक्षसावर्णिनामान्तर आयुष्मतोऽम्बुधारायाम् ऋषभः ९, दशमे ब्रह्मसावर्ण्यन्तरे विश्वसृजो विषूच्यां विष्वक्सेनः १०, एकादशे धर्मसावर्ण्यन्तरआर्यकस्य वैधृतायां धर्मसेतुः ११, द्वादशे रुद्रसावर्ण्यन्तरे सत्यसहसः सूनृतायां सुधामा १२, त्रयोदशे देवसावर्ण्यन्तरे देवहोत्रस्य बृहत्यामुपहर्त्ता १३, चतुर्दशे इन्द्रसावर्ण्यन्तरे सत्रायणस्य वितानायां बृहद्भानुः १४। अत्र केवलं चतुर्दशावतारा वर्णिताः। प्रत्यवतारं तस्य पितुर्मातुश्च नामापि वर्णितम्। चतुर्दशमनूनामपि श्रीविष्णोरवतारत्वात्सर्वेऽष्टाविंशतिमिता अवतारा भवन्ति। एष्ववतारेषु मनुयज्ञहरिवामनाख्याश्चत्वार एवावतारा विश्रुताः सन्ति। अन्ये सर्वेऽप्यवतारा अविख्याताः सन्ति।

चतुर्थः प्रसङ्गश्च श्रीमद्भागवतस्यैकादशे स्कन्धे चतुर्थाध्यायेऽस्ति। अत्र ऋषभपुत्रेण योगेश्वरेण द्रुमिलेन राज्ञे विदेहाय श्रीविष्णोरवतारा वर्णिताः। अत्र सङ्ख्या, नामानि, क्रमस्त्वेवं सन्ति। पुरुषः १, शतधृतिः २, विष्णुः ३, रुद्रः ४, नारायणः ५, हंसः ६, दत्तः ७, कुमारः ८, ऋषभः ९, हयास्यः १०, मत्स्यः ११, वराहः १२, कूर्मः १३, हरिः १४, वालखिल्यरक्षकः १५, इन्द्ररक्षकः १६, नृसिंहः १७, मनुः १८, वामनः १९, परशुरामः २०, श्रीरामः २१, कृष्णः २२, बुद्धः २३, कल्की २४, अत्र चतुर्विंशतिमिताः श्रीहरेरवतारा वर्णिताः। अत्रादिमः पुरुषोऽन्तिमश्च कल्क्यवतारोऽस्ति। अत्र प्रसङ्गे पञ्चदशः षोडशश्चावतारो नाम्ना न निर्दिष्टस्तदपि 'संस्तुन्वतोऽब्धिपतिताञ्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम्। इति पद्यार्धेनावतारद्वयस्य चरित्रं स्फुटं निर्दिष्टम्। अत्रापि विश्रुतान् यज्ञध्रुवपृथुकपिलधन्वन्तरिव्यासाख्यान् षडवतारान् विहाय पुरुषशतधृतिविष्णुरुद्रवालखिल्यरक्षकेन्द्ररक्षकसञ्ज्ञानन्यानेव षडवतारान् सङ्गृह्य श्रीहरेश्चतुर्विंशत्यवताराणां सङ्ख्या स्वीकृता। इति।

एवं श्रीमद्भागवतेऽन्यान्येषु च शास्त्रेषु श्रीविष्णोरवताराणां सङ्ख्यायां, नामसु, विरोधः पूर्वापरक्रमविरोधश्च कल्पभेदेन परिहर्तव्यौ। वस्तुतस्तु–'अवतारा ह्यसङ्ख्येया हरेः सत्वनिधेर्द्विजाः। यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः। १। यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन् स तु बालबुद्धिः। रजांसि भूमेर्गणयेत् कथञ्चित्कालेन नैवाखिलशक्तिधाम्नः। २।' इत्याद्यासमुखोक्तेः, 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्'। १। इति श्रीमद्भगवद्गीतायां श्रीभगवदुक्तेश्च श्रीहरेरवताराणां सङ्ख्यायां, नामसु क्रमे चातिनिर्बन्धविधानं विफलमेव खलु। इति।

नित्यस्मरणार्थं श्रीविष्णोश्चतुर्विंशत्यवताराणां क्रमतो नाम प्रदर्शक एकः श्लोकः।

( शिखरिणी वृत्तम् )

किरो यज्ञो दत्तान्तग कपिलवैधात्रमुनयो,
ध्रुवो वैन्योनाभ्यात्मज हयमुखौ मत्स्यकमठौ।
नृसिंहो हर्यङ्घ्रोऽदितिजमनुहंसा अथ भिषग्,
द्विरामाख्यं कृष्णद्वितयमथ बुद्धः कलिहरः। १।

## श्रीविष्णुचरितामृतेऽस्मिंश्चित्रकाव्ये वर्णितानां सर्गाणामवतारानुक्रमेण नामानि, सङ्ख्या, श्लोकसङ्ख्या च ।

| सङ्ख्या | सर्गनाम, | | श्लोकाः, | सङ्ख्या, | सर्गनाम, | | श्लोकाः |
|---|---|---|---|---|---|---|---|
| १ | वराहाङ्कः | ,, | ३२ | २० | रामाङ्कः | ,, | ३२ |
| २ | यज्ञाङ्कः | ,, | ८ | २१ | ,, | ,, | ३२ |
| ३ | कपिलाङ्कः | ,, | ८ | २२ | ,, | ,, | ३२ |
| ४ | दत्ताङ्कः | ,, | ८ | २३ | ,, | ,, | ३२ |
| ५ | सनकाद्यङ्कः | ,, | ८ | २४ | ,, | ,, | ३२ |
| ६ | नारायणाङ्कः | ,, | ८ | २५ | ,, | ,, | ३२ |
| ७ | ध्रुवाङ्कः | ,, | ३२ | २६ | ,, | ,, | ३२ |
| ८ | पृथ्वङ्कः | ,, | ३२ | २७ | ,, | ,, | ३२ |
| ९ | ऋषभाङ्कः | ,, | ३२ | २८ | कृष्णाङ्कः | ,, | ३२ |
| १० | हयग्रीवाङ्कः | ,, | ८ | २९ | ,, | ,, | ३२ |
| ११ | मत्स्याङ्कः | ,, | ८ | ३० | ,, | ,, | ३२ |
| १२ | कूर्माङ्कः | ,, | ८ | ३१ | ,, | ,, | ३२ |
| १३ | नृसिंहाङ्कः | ,, | ३२ | ३२ | ,, | ,, | ३२ |
| १४ | हर्यङ्कः | ,, | ८ | ३३ | ,, | ,, | ३२ |
| १५ | वामनाङ्कः | ,, | ३२ | ३४ | ,, | ,, | ३२ |
| १६ | हंसाङ्कः | ,, | ८ | ३५ | व्यासाङ्कः | ,, | ३२ |
| १७ | मन्वङ्कः | ,, | १६ | ३६ | बुद्धाङ्कः | ,, | ८ |
| १८ | धन्वन्तर्यङ्कः | ,, | ८ | ३७ | कल्क्यङ्कः | ,, | ८ |
| १९ | पर्शुरामाङ्कः | ,, | ३२ | सर्वे सर्गाः, | सर्वेऽवताराः, | | सर्वे श्लोकाः |
| | | | | ३७ | २४ | | ८५६ |

# श्रीविष्णु चरितामृतम्

चित्र काव्यम् मूलमात्रं च ।



अथ वराहाङ्कः प्रथमः सर्गः ।

श्रीसेव्यं वि ष्णुमासेव्य,
चित्ते वि श्वं च तज्जनम् ।
कुर्वे श्री वि ष्णुचरिता-,
मृतं वि ष्णु जनप्रियम् ॥ १ ॥

वृत्तं स र्व त्र काव्येऽत्रा-,
नुष्टुब्वि ष यभूषितम् ।
शास्त्रेष द्धा
गुम्फितं रो चनं सताम् ॥ २

निहितं भू रियत्नेन,
श्रीभार त समीरितम् ।
सहस्रं भ गवन्नाम्ना-,
मदः का व्य वरोदरे ॥ ३ ॥

इदं श्री भ गवत्काव्यं,
स्वर्णदी व स्वसेविनः ।
प्रपूया त्प्र णयं चेमं,
प्रपूर्वो भुः पिपर्तु मे ॥ ४ ॥

पुरा व भू व राजर्षिः,
स्वयम्भू त नयो महान् ।
यः स्मृतिं कृ तवान् स्वीयां,
निसर्गो द्भू तबोधभूः ॥ ५ ॥

सोऽभूत्कृ त युगस्यादौ,
सर्वभू भृ च्छिरोमणिः ।
सदा स द्भा वसम्पन्नः,
स्वप्रभा वो द्धृताहितः ॥ ६ ॥

निर्दिष्टो भू वसृष्टौ स,
स्वमूचे ता तमेकदा,
समस्ता त्मा श्रयीभूता,
जलधौ भू रियं गता ॥ ७ ॥

वयं ता त क वत्स्यामो,
भवेत्को भा रभाजनम् ।
कथं जी व नमेतासां,
प्रजानां नः प्रभो भवेत् ॥ ८ ॥

श्रुत्वेति पू तमनसः,
सूनोर्धा ता शुभां गिरम् ।
परमा त्मा नमादध्यौ,
स्वसन्ता प निवृत्तये ॥ ९ ॥

दुःखदू र करः स्वेषां,
प्रदध्यौ मा धवस्तदा ।
वराहा त्मा वतीर्याह-,
मुद्धरे च जलान्महीम् ॥ १० ॥

निश्चित्य मु रजिच्चित्ते,
निजभ क्ता मरद्रुमः ।
ना नां विनाशाय,
क्रोडरू प मियेष सः ॥ ११ ॥

नासिका र न्ध्रतस्ताव-,
दणुता मा स्थितो विधेः ।
भूदारी ग र्भसम्भूतो,
दैत्यारा तिः प्रकट्यभूत् ॥ १२ ॥

किमहो **अ** द्भुतं सत्वं,
विलोक्य **व्य** स्मयन्त ते ।
प्रावृट्प **यः** समूहाभो,
ववृधे **पु** रुषोत्तमः॥ १३ ॥

ससुमे **रु** समोत्तुङ्गो,
वन्यवे **षः** प्रविष्टवान् ।
कल्पान्त **सा** गरं भीमं,
स्वस्पर्श **क्षी** णकल्मषम् ॥१४॥

स कृत्वा **क्षे** त्ररूपां क्ष्मां,
दंष्ट्रामा **त्र** निवेशिताम् ।
त्रिवेद **ज्ञो** पगीताङ्गो,
निःसृतः **क्ष** णतोऽम्बुधेः॥१५॥

यावत्सु **र** वरेणोर्वी,
न्यस्ता सा **ए** धितद्युतिः ।
अध्यर्ण **व** जलं तावद्,
दैत्यः खे **च** र आगमत् ॥१६॥

दैतेयो **यो** द्धुकामोऽयं,
बभाषे **गो** भृतं हरिम् ।
प्रच्छन्नं **यो** हरेत् किञ्चित्,
सदासौ **ग** र्हितः सताम् ॥१७॥

त्वां युद्ध **वि** षयां विद्यां,
नानाभे **दां** प्रदर्शये ।
प्रतिजा **ने** स्वसौख्येप्सुः,
को गां ने **ता** ममाग्रतः ॥ १८ ॥

यदेत्थं **प्र** लपन्तं तं,
हरिर्बा **धा** हरः सताम् ।
निजघा **न** तदा देवा-,
स्तुष्टुवुः **पु** रुषोत्तमम् ॥ १९ ॥

हन्तुं पौ **रु** षगर्विष्ठान्,
नरवे **षे** ण राक्षसान् ।
जगदी **श्व** र को वान्य-,
स्त्वां विनो **रः** श्रितश्रियम् ॥२०॥

अभिमा **ना** द्धिरण्याक्षः,
सुरासु **र** नरोरगान् ।
जित्वासौ **सिं** हवद् दृप्तो-,
ऽवमेने **ह** सिताननः॥ २१ ॥

जना भ **व** त्कृपादृष्टया,
पुरा प्रा **पुः** परम्पदम् ।
मोक्षदं **श्री** प्रदं देवं,
कस्त्वां धी **मान्** परित्यजेत्॥२२॥

त्वद्दते **के** जगत् त्रातुं,
लोके के **श** व शक्नुयुः ।
त्वत्प्रभा **वः** सुदुर्ज्ञेयः,
सुधीभिः **पु** रुषैरपि ॥ २३ ॥

सताम **रु** न्तुदो नष्टो,
दिष्टया रो **षो** न्मदस्त्वया ।
पुरुषो **त्त** म मूर्ध्ना त्वां,
प्रणमा **मः** सदा वयम् ॥२४॥

बहूनां स द्विषां
त्वया ग र्वः प्रणाशितः ।
दैत्येन्द्र श मनेनाद्य,
जनः स र्वः सुखी कृतः ॥२५॥
सततं शि वदः पन्था,
निजदै वः सदातनः ।
त्वया सं स्था पितो लोके,
स्थास्नुः स्था णु रिवस्थितः ॥२६॥
वातवा भूं स्वतेजांसि,
भवान् भू ता नि सृष्टवान् ।
जगदा दि त्वमेवात–,
स्तत्त्वज्ञै र्नि श्रितं त्वयि॥२७॥
इत्थं वि धि मुखा देवा–,
स्तुत्वा सु र हरं हरिम् ।
ययुस्ते व्य सनान्मुक्ता,
भूयो भू यः प्रणम्य तम्॥२८॥
लब्ध्वात्म स द्मरूपां तां,
स विश्व म्भ रतेजसा ।
स्वायम्भु वो मुदा युक्तः,
शश्लाघे भा ग्यमात्मनः॥२९॥
मनुना व न्दितो भक्त्या,
समस्तै र्नो हरः सताम्
स्वं लोकं भ व्यलोकाप्यं,
जगद्ध र्त्ता प्रयातवान्॥३०॥
स्रष्ट्रात्म प्र भवा कन्या,
कृतात्म भ वगेहिनी ।
स मान वः प्रजासर्ग–,
स्तत्कृतः प्र सृतः क्षितौ ॥३१॥
भुवनेऽ भु र्वराहस्य,
या दुष्टा री ष्टदाः कथाः ।
पाठादी श्व र एतासां,
पद्मादा रः प्रसीदतु ॥ ३२ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
वराहाङ्कः प्रथमः सर्गः
सम्पूर्णः ॥ १ ॥

## अथ यज्ञाङ्को द्वितीयः सर्गः ।

बभूव स्व भुवः सूनु–,
र्नाम्ना स्वा य म्भुवो मनुः ।
यं स्वय म्भूः क्षमं मेने,
निजवं श विवृद्धये ॥ १
हर्षं श म्भु मुखेभ्योऽसौ,
विरिञ्चे रा त्मजोऽददात् ।
सरोजा दि कविरुद्यो,
यथादि त्यः खलूदितः ॥ २ ॥

आकूतिं **पु** त्रिकां ज्येष्ठां,
निजां नि **ष्क** ल्मषां सतीम् ।
रुचये **रा** जराजोऽदात्,
कामाद्य **क्षो** भितात्मने ॥ ३ ॥

यज्ञना **म** धरः स्वेषां,
काममो **हा** दिनाशनः ।
तत्पल्यां **स्व** जनश्रेष्ठो,
विष्वक्‌से **नः** खल्वदभूत् ॥ ४ ॥

तस्याथो **अ** र्कसङ्ख्याता–,
स्तुषिता **ना** मतः सुताः ।
जज्ञिरे **दि** तिजान् दुष्टान्,
निहन्तुं **नि** श्चितक्रियाः ॥५॥

विष्णवारा **ध** न संलग्नं,
हन्तुं मौ **नो** त्सुकं मनुम् ।
दैत्याना **धा** वतो हत्वा,
सोऽपान्मा **ता** महं निजम् ॥ ६ ॥

तमिन्द्रं **वि** दधे राजा,
स्वान्तरे **धा** तुरात्मजः ।
तस्य मा **ता** महः प्रेम्णा,
मनुर्मे **धा** विनां वरः ॥ ७ ॥

संसारा **तु** रचित्तानां,
यदाख्या **रु** चिरौषधम् ।
ज्ञानवि **त्त** प्रदं यज्ञं,
तं निष्का **मः** सदा भजे ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रि-प्रणीते
यज्ञाङ्को द्वितीयः सर्गः
सम्पूर्णः ॥ २ ॥

## अथ कपिलाङ्कस्तृतीयः सर्गः ।

छायाया **अ** भवद्धातुः,
कर्दमः **प्र** थितः सुतः ।
प्रजास्त्व **मे** धयस्वेति,
तमम्भो **यो** निजोऽन्वशात् ॥ १ ॥

तदाज्ञां **हृ** ष्टचित्तोऽसौ,
मृदुभा **षी** समग्रहीत् ।
स द्रुढौ **के** तपस्तमु–,
मुद्वाहा **शः** सरस्वतीम् ॥ २ ॥

तत्तपः **प** रमप्रीतः,
सद्धृत्स **द्म** स्थितो वरम् ।
दत्त्वा ते **ना** र्चितो भेजे,
पद्मना **भो** निजं पदम् ॥ ३ ॥

तत्पल्यां **म** नुकन्यायां,
जज्ञे सु **र** वरो हरिः ।
कपिलः **प्र** थितो नाम्ना,
प्रपूर्वो **भुः** स योगिनाम् ॥ ४ ॥

कर्दमो **वि** पिनं गत्वा,
ध्यायन्नी **श्व** रमात्मनि ।
लो **क** मगाद् विष्णोः,
कः सत्क **र्मा** न सिध्यति ॥५॥

सयोग **म** वद्ज्ज्ञानं,
म **नु** तनूजया ।
कपिल **स्त्व** रया येन,
नरः क **ष्टा** द्विमुच्यते ॥ ६ ॥

स स्वात्म **स्थ** मनोवृत्ति-,
र्भोगेभ्यो **वि** गतस्पृहः ।
मुनिश्रे **ष्ठः** स्वकं चक्रे,
निवास **स्थ** लमम्बुधिम् ॥७॥

यद् गिरा **वि** शदं ज्ञानं,
श्रुतिसा **रो** त्तमं नरः ।
लभते **ध्रु** वमस्त्वेष,
कपिलो **वः** सुखप्रदः ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
कपिलाङ्कस्तृतीयः सर्गः
सम्पूर्णः ॥ ३ ॥

## अथ दत्ताङ्कश्चतुर्थः सर्गः ।

पुत्रोऽथो **अ** त्रिनामा भूद्,
ध्यानव्य **ग्रा** त्मनो विधेः ।
सूनुना **ह्य** मुना ब्रह्मा,
मनस **श्शा** न्तिमागमत् ॥१॥

पित्रा वि **श्व** स्य सृष्ट्यर्थ-,
मनुज्ञा **तः** कुलाचलम् ।
गत्वासौ **कृ** तवांस्तीव्रं,
ध्यानं वि **ष्णो** र्जगत्पतेः ॥ २ ॥

ब्रह्मादि **लो** कपालेशो,
भक्तानां **हि** तकारकः ।
तस्य शी **ता** तपक्षान्त्या,
पुष्करा **क्षः** प्रसेदिवान् ॥ ३ ॥

यथेष्टं **प्र** ददावस्मै,
पुत्रार्थं **त** न्वते तपः ।
ज्ञात्वा हा **र्द** मभिप्रायं,
विष्वक्से **नः** शुभं वरम् ॥ ४ ॥

तस्यात्रेः **प्र** थितो दत्तो,
विष्ण्वंशोऽ **भू** द्यथात्मजः ।
सोमो जा **त** स्तु विध्यंशो,
दुर्वासा **स्त्रि** दृगंशजः ॥ ५ ॥

संसार **क** र्मरहितो,
दत्तोऽत्रि **कु** लनन्दनः ।
यथाल **ब्धा** त्मसन्तोषः,
स्वात्मारा **म** स्तदाभवत् ॥ ६ ॥

यस्याङ्घ्रि प ङ्कजं राजा,
हैहयो वि दितात्मनः ।
त्रं भजन् भेजे,
स्वैश्वर्य म तिदुर्लभम् ॥ ७ ॥

जगन्म ङ्ग लकर्तारं,
शुद्धशी लं जितेन्द्रियम् ।
मुक्तिं प्रा प यदुर्दत्तं,
योगिवी रम् प्रसाद्य तम् ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
दत्ताङ्कश्चतुर्थः सर्गः
सम्पूर्णः ॥ ४ ॥

## अथ सनकाद्यङ्कः पञ्चमः सर्गः

त्रिलोक्या ई श्वरं भेजे,
ब्रह्मा स्वा शा प्रपूर्त्तये ।
शोकदी नः पुमानन्यं,
भजेत्कं प्रा प्नुमीहितम् ॥१॥

स्मृत्या त्रा ण कृतो यस्य,
दुःखच्छे दः प्रजायते ।
स्वेप्सितं प्रा प्नुयादर्थं,
सप्रमा णो ऽयमाश्रवः॥ २ ।

सनक ज्ये ष्ठसत्पुत्रान्,
सुरज्ये ष्ठः किलाप्तवान् ।
चतुरः श्रे यसां लब्धा,
हरेः प्रे ष्ठः सदा मतः ॥३

न तदा प्र त्यगृह्णंस्ते,
पित्राज्ञां जा तनिश्चयाः ।
नरं किं प रमात्मज्ञं,
भवप्री तिः प्रहर्षयेत् ॥ ४ ।

द्रष्टुं वि हि तसङ्कल्पा,
ः पु र वरं गताः ।
शेपुः पु ण्य चरित्रास्ते,
द्वारस्थौ ग र्वसम्भृतौ ॥ ५ ।

वेदग र्भो ऽपि तैः पुत्रै-,
र्विरेजे भू रिविक्रमैः
भूलोको ग र्भगात्मैष,
यथा वा र्भो त्तमाब्धिभिः॥६।

सदा ते मा धवध्याना,
कामक्रो ध विवर्जिताः ।
जनान् भ वो दधेः पारं,
निन्युः स म दशो बहून् ॥ ७

स्वज्ञान धु तसंसारा-,
श्चत्वारः सू नवो विधेः
सनका द्य उत्कर्षं,
ददतां नः सदात्मनि ॥ ८ ।

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
सनकाद्यङ्कः पञ्चमः सर्गः
सम्पूर्णः ॥ ५ ॥

## अथ नारायणाङ्कः षष्ठः सर्गः ।

धर्मोऽथो **ई** प्सितः पुत्र–,
स्तनाद्वि **श्व** सृजोऽभवत् ।
मूर्त्यां धी **रो** ऽस्य भार्यायां,
द्विमूर्त्या **वि** रभूद्धरिः ॥ १ ॥

तपश्च **क्र** तुरत्युग्र,
जगता **मी** श्वरेश्वरौ ।
आश्रितौ **ध** नदस्याशां,
सज्जना **न्वी** तसद्व्रतौ ॥ २ ॥

तपसा **मे** पदं प्राप्तु–,
मिच्छेन्मे **धा** व्यसाविति ।
मत्वेन्द्रो **वी** तधीः कामं,
तुतुदे **वि** जयोत्सुकः ॥३॥

न स्वच **क्र** युतोऽप्येनं,
जेतुं का **मः** क्षमोऽभवत् ।
वने वि **क्र** मितुं शक्तः,
करिस्तो **मः** कुतो हरिम् ॥४॥

बिडौजा **अ** विभेद् दृष्ट्वा,
धर्मसू **नु** तपोबलम् ।
अस्वाय **त्त** मनस्कानां,
को वा का **मो** ऽस्ति मोदकृत् ॥५॥

स प्रादा **दु** र्वशीं तेभ्यो,
मुनिर्ना **रा** यणो घृणी ।
अपरा **ध** शतेनापि,
न ह्यम **र्षः** सतां भवेत् ॥६॥

चकार **कृ** तकृत्यं स,
मृकण्ड **त** नयं प्रभुः ।
को न वि **ज्ञः** कृपालुं तं,
भजते **कृ** तिनां वरम् ॥७॥

तं विभू **ति** प्रदं स्वेभ्यो,
वन्दे ना **रा** यणं प्रभुम् ।
यः सदा **त्म** प्रदः पाति,
कृतसे **वान्** स्वकान् जनान् ॥८

इति श्रीविष्णुचरितामृतं चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
नारायणाङ्कः षष्ठः सर्गः
सम्पूर्णः ॥ ६ ॥

## अथ ध्रुवाङ्कः सप्तमः सर्गः ।

कृतादौ **सु** कृती राजा,
सर्ववी **रे** ड्यविक्रमः ।

हरेरं **शः** स्वभूस्त्वाय–,
म्भुवो वं **श** धरो विधेः ॥१॥
स पुत्र **र,** त्नमुत्तान,
पादं प्रा **णं** यथा तनुः ।
लेभे वं **श** धरं स्वस्य,
राजा ध **र्म** भृतां वरः ॥ २ ॥
सुनीतिं **वि** धिना लब्ध्वा,
पत्नीं वि **श्व** जनादृताम् ।
तया न **रे** श्वरो रेजे,
स प्रचे **ताः** श्रिया यथा ॥३॥
तस्याति **प्र** थितो लोके,
ऽ **जा** यत ध्रुवः ।
**भ** गवन्मूर्त्ति,
यत्प्रभा **वः** सुविश्रुतः ॥ ४ ॥
महौजा **अ** न्यभार्यायां,
सुरुच्यां **ह** र्षदः पितुः ।
उत्तम **स्सं** स्मृतो नाम्ना,
जज्ञे दे **व** समद्युतिः ॥ ५ ॥
पुत्रवा **त्स** ल्यतोऽन्येद्युः,
स्वाङ्कमा **रो** प्य चोत्तमम् ।
राजदि **व्या** सनस्थोऽसौ,
महीपा **लः** स्वलालयत् ॥ ६ ॥

आरोढुं **प्र** णयादङ्कं,
ध्रुव म **त्य** भिलाषिणम् ।
स्त्रीविधे **यः** क्षितीन्द्रोऽसौ,
नादद्रे **स** ज्जनादृतम् ॥ ७ ॥
ध्रुवं ग **र्व** युता राज्ञो,
विमाता **द** यितावदत् ।
अङ्कस्य **र्हो** हठेन त्वं,
**नः** प्रतीयसे ॥ ८ ॥
तवासा **अ** नुजो राज्ञा,
युवरा **जः** प्रकल्पितः ।
भविता **स** च राजान्ते,
वयं स **र्वे** ऽस्य किङ्कराः॥९॥
त्वं चेदै **श्व** र्यकामोऽसि,
तपोधी **रः** समाचर ।
भूत्वाप्स्य **सि** सुतस्त्वं मे,
तपः सि **द्धः** समीहितम् ॥१०॥
तृष्णया **सि** ध्यते नार्थो,
दुःखवृ **द्धिः** पुनर्भवेत् ।
सन्तोषः **स** म्पदां मूलं,
तृष्णा स **र्वा** पदां पदम् ॥११॥
विमात्रा **दि** तमभैवं,
ध्रुवः प **र** मकोपनः ।
जगामा **च्यु** तभक्त्युक्त–,
स्त्यक्तता **तः** स्वमातरम् ॥ १२ ॥

## ध्रुवाङ्कः सप्तमः सर्गः ।

मातास्रु **वृ** ष्टिमुञ्चन्ती,
पुत्रं रो **षा** न्वितेक्षणम् ।
आरोप्या **क** ल्मषं स्वाङ्के,
सुधीरा **पि** तदा रुदत् ॥ १३ ॥

दुःखपा **र** मपश्यन्ती,
पुत्रं वा **मे** क्षणावदत् ।
तात मा **या** हि शोकं त्वं,
शोकेना **त्मा** विशुष्यति ॥ १४ ॥

यदि ते **स** वैराज्येहा,
तर्हि स **र्व** प्रभुं हरिम् ।
भज त्वं **यो** हि सर्वेषां,
राज्यभो **ग** प्रदायकः ॥ १५ ॥

स्वमात्रा **वि** धिनादिष्टः,
सर्वतो **निः** स्पृहो ध्रुवः ।
पुरान्निः **सृ** त्य कालिन्द्या-,
स्तटं या **तः** प्रियं हरेः ॥ १६ ॥

जपन् दे **व** र्षिणादिष्टं,
सुमन्त्रं **सु** रदुर्लभम् ।
तत्रापू **र्व** धृतिश्चक्रे,
विजिता **सु** रसौ तपः ॥ १७ ॥

एकाग्र **म** नसा विष्णुं,
स्मरन्मौ **ना** न्वितोऽनिशम् ।
पञ्चाब्दः **स** च षण्मासान्,
धृतस **त्यः** पुरानयत् ॥ १८ ॥

तपसा **स** हसा तुष्टः,
सप्तमे **मा** सि माधवः ।
ध्रुवस्या **त्मा** शयाभिज्ञः,
सङ्कल्पं **स** फलं व्यधात् ॥ १९ ॥

तस्येच्छा **मि** ति सम्पूर्य,
लोकं या **तः** स्वकं हरिः ।
ध्रुवोऽपि **स** मगात्प्रीतः,
प्राप्तका **मः** पुरं निजम् ॥ २० ॥

नृपोऽथो **अ** भ्यगात् प्रीतो,
द्रष्टुका **मो** निजं सुतम् ।
अपामो **घः** स्थलं निम्नं,
नैति किं **पु** रतः स्थितम् ॥ २१ ॥

सातिच **ण्ड** स्वभावापि,
**री** प्सितं ध्रुवम् ।
विमातै **का** न्ततः प्रेम्णा,
सञ्चक्रे **क्षो** णिपप्रिया ॥ २२ ॥

वनान्नि **वृ** त्तमालोक्य,
कुलभू **ष** णमात्मजम् ।
सुनीतिः **क** ल्पनातीतां,
लेभे ध **र्मा** न्विता मुदम् ॥ २३ ॥

आत्मानं **वृ** द्धमालोच्य,
चित्ततो **षा** न्वितः पिता ।
राजानं **कृ** तवान् प्रेम्णा,
दृष्टनी **तिः** सुनीतिजम् ॥ २४ ॥

श्रीपते **रु** त्तमं लोकं,
लेभे वि **द्रो** हवर्जितः ।
राजा स **ब** लभित्तुल्य-,
स्तप्त्वा ब **हु** समास्तपः ॥ २५ ॥
उत्तमं **शि** वमित्राद्रौ,
मृगं दू **रा** दनुद्रुतम् ।
चखाद **ब** लवान् कश्चिद्,
यक्षो ब **भ्रु** रिवोरगम् ॥ २६ ॥
सुरुचि **र्वि** मनाः प्रागात्,
पुत्रं सा **श्व** मवेक्षितुम् ।
दुर्दैव **यो** गजोऽधाक्षीत्,
स्वाहाजा **निः** क्षणेन ताम् ॥२७॥
तच्छ्रुत्वा **शु** ध्रुवेणाथ,
हतास्ते **चि** त्रसायकैः ।
आश्रिता **श्र** यदेनापि,
ह्युपदे **वाः** क्षयं ययुः ॥२८॥
प्रजहा **अ** वशिष्टांस्तु,
यक्षान **मृ** तवद् गिरा ।
अनुनी **तः** कुबेरेण,
धनको **शा** धिपेन सः ॥२९॥
मूर्ध्ना वि **श्व** नुतस्यास्य,
नृपत्रा **तः** समागतः ।
नरेन्द्रा **स्था** नसंस्थस्य,
पादरे **णु** मधाच्छिवम् ॥३०॥
भुक्त्वा स **र्व** सुखान्यत्र,
त्यक्त्वान्ते **रा** ज्यमात्मवान् ।
नरवी **रो** हरेर्लोक-,
मारुरो **हो** त्तमं ध्रुवः ॥३१॥
सर्वका **म** प्रदं यो वै,
शोकमो **हा** दिनाशनम् ।
श्रद्दधी **त** ध्रुवाख्यानं,
तस्य ता **पाः** कदापि न ॥३२॥

इति श्रीविष्णुचरितामृते--चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
ध्रुवाङ्कः सप्तमः सर्गः
सम्पूर्णः ॥ ७ ॥

## अथ पृथ्वङ्कोऽष्टमः सर्गः ।

ध्रुवस्य **स** मभूद्वंशे,
सुमति **र्व** दतां वरः ।
कृतया **गः** क्षितीशोऽङ्गः,
सम्मतः **स** र्व भूभुजाम् ॥ १ ॥
तस्य स **र्व** समृद्धस्य,
यज्ञादि **वि** धिकारिणः ।
राज्ञोऽस **द्गा** ग्यतो नासी-,
त्तनयोऽ **नु** नयप्रदः ॥ २ ॥

नृपते **र्वि** मनस्कस्य,
विषये **ष्व** स्पृहात्मनः ।
ऋतुमु **क्से** वनादन्ते,
नाम्ना वे **नो** ऽभवत्सुतः ॥ ३ ॥

जनन्या **ज** न्मदोऽस्याभू–,
न्मृत्युस्ते **ना** प्यभूदसौ ।
दुष्टो नि **र्द** यचित्तश्च,
ख्यातो वे **नः** स्वकर्मभिः ॥ ४ ॥

तनयं **वे** नतातः स्वं,
सदोषं **दो** षवर्जितः ।
यत्नैः स **वे** दवित्प्रोक्तै–,
र्नाशक्तो **द** नुशासितुम् ॥५॥

विहाय **वि** मना राज्यं,
निशीथे **द** मितेन्द्रियः ।
पुत्रजं **व्य** सनं सोढु–,
मशक्तोऽ **ज्ञो** वनं ययौ ॥ ६ ॥

आत्मन्या **वे** शितस्वान्तो,
गुं वे **दा** न्तदुर्गमम् ।
ध्यायन्न **ज्ञो** ऽचिराल्लेभे,
पदं दे **वे** न्द्रवन्दितम् ॥७॥

जनैः सु **द** यितै राज्ञो,
न लब्धो **वि** चितोऽपि सः ।
गन्तुमु **त्क** मना नित्यं,
लभ्यते **विः** कुतोगतः ॥ ८ ॥

अनूपं **लो** कमालोक्य,
नृपतेः **का** र्यदर्शिभिः ।
कृतोऽमे **ध्य** मतिर्वेनो,
राज्याध्य **क्षः** खलोऽपि सः॥९॥

सर्वे त्रे **सु** रतिक्रूरं,
श्रुत्वा तं **रा** ज्यसंस्थितम् ।
नापरा **ध्य** ति किं सर्पो,
निजय **क्षो** ऽधिसंश्रितः॥१०॥

वेनेना **ध** र्मशीलेन,
सर्वे ध **र्मा** निराकृताः ।
अधर्मोऽ **ध्य** धिकं भूमौ,
सद्विप **क्षः** सुविस्तृतः ॥११॥

प्रार्थनां **कृ** तवन्तोऽस्य,
समवे **ता** महर्षयः ।
मा धर्मं **कृ** न्धि राजेन्द्र,
लभन्तेऽ **तः** सुखं जनाः॥१२॥

यदा व **च** नमेतेषां,
न ग्रही **तु** मियेष सः ।
तदा तै **रा** गतक्रोधैः,
स दुरा **त्मा** विनाशितः॥१३॥

तद्बाहू **च** यदा मथ्नन्,
विप्राः क्र **तु** करास्तदा ।
कन्यार्चि **र्व्यू** ढवक्षाश्च,
पृथुर्दे **ह** भवोऽभवत्॥१४॥

स पृथु **श्च** कृपाण्यंशो,
यार्चिः सा **तु** रमांशजा ।
तयोर्हा **र्द** मिथोऽभूद्यत्,
सर्वद्र **ष्ट्र** गमं हि तत् ॥१५॥

पृथुरा **श्च** र्यकर्मासौ,
नानाक्र **तु** क्रियाकरः ।
बलेन **र्भु** प्रभुप्रख्यो,
राजरा **जः** कृतो द्विजैः ॥१६॥

यस्य वि **भ्रा** जते शुभ्रा,
यशोरा **जि** र्जगत्त्रये ।
सदा वि **ष्णु** मसौ भेजे,
तं पृथु **र्भो** गनिःस्पृहः ॥१७॥

क्षुधार्ता **ज** न तां स स्वा–,
मन्नही **नं** च भूतलम् ।
दृष्ट्वेभ्यो **भो** जनं दातुं,
चिन्तायु **क्ता** न्तरोऽभवत् ॥१८॥

निश्चिक्ये **स** महीं हन्तुं,
ज्ञात्वा तां **हि** प्रजार्त्तिदाम् ।
कः सहि **ष्णु**
सोढुमू **र्ज** स्खलः क्षमः ॥१९॥

हन्तुमा **ग** तमालोक्य,
सत्रासा **दा** ह भूः पृथुम् ।
त्वं साक्षा **दि** न्द्रियाधीशो,
निर्गुणोऽ **जः** परः पुमान् ॥२०॥

मामथो **अ** नघां दीनां,
हन्तुं स्त्रीं **न** त्वमर्हसि ।
दृष्ट्वा त्वां **घो** ररूपं हि,
जाताहं **वि** ह्वला विभो ॥२१॥

अब्रवी **ज** मयं दुग्धं,
दोग्धुं ध्ये **यो** विधिस्त्वया ।
सर्वं रा **जे** न्द्र दास्येऽहं,
धेनूभू **ता** तवेप्सितम् ॥२२॥

तथैव **वि** दधे वैन्यो,
यथा वि **श्व** म्भरादिशत् ।
तदुपा **यो** पयोगेन,
दुर्भिक्षं **निः** सृतं ततः ॥२३॥

पृथुः स्व **पु** रसंस्थोऽसौ,
सज्जना **न** न्ददोऽभवत् ।
श्रीपृथो **र्व** पुषोदीप्त्या,
सर्वे त्रे **सुः** सुरद्विषः ॥२४॥

स भूमा **उ** त्तमो राज्ञां,
सद्गुणो **पे** तयार्चिषा ।
पौलोम्ये **न्द्रो** यथा स्वर्गे,
रेजे दे **वा** धिकद्युतिः ॥२५॥

**म** स्तथा यज्ञा–,
नेकदै **नः** प्रणाशिनीम् ।
रम्यव **प्रां** महीन्द्रोऽसौ,
जगामा **शु** सरस्वतीम् ॥२६॥

रम्ये स र स्वती तीरे,
यष्टुका मो हरिं पृथुः ।
निर्गता घः शतं यज्ञान्,
आरेभे शु द्धमानसः ॥ २७ ॥

रचितो चि तसम्भारः,
शक्राद्या रू ढवैभवः ।
समृद्ध्यो र्जि तया युक्तः,
पृथोर्जा तः क्रतूत्सवः ॥ २८ ॥

चक्रेऽथो अ न्तिमे यज्ञे,
सञ्जाता ती वमत्सरः ।
विघ्नमि न्द्रः परोत्कर्षं,
मत्सरी स हते कथम् ॥२९॥

लज्जास ङ्कु स्तहृदयं,
त्यक्तद्रो हः स्वपादयोः ।
नमन्तं स दयः शक्रं,
सन्निस र्गो ऽन्वकम्पत ॥३०॥

धू तविज्ञानो,
ब्रह्मजा ता दृषेरसौ ।
परमा त्मा नमापेदे,
सश्रीको नि यतेन्द्रियः ॥३१॥

जनो गा य ति यः कीर्तिं,
पृथोर्व्या मो हनाशिनीम् ।
स दुर्जे य मवाप्नोति,
मः परम्पदम् ॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
पृथ्वङ्कोऽष्टमः सर्गः
सम्पूर्णः ॥ ८ ॥

## अथ ऋषभाङ्को नवमः सर्गः

प्रजज्ञे वे धसः स्वाय-,
म्भुवश्चा द्यो महीभुजाम् ।
तनयो वै सुतोऽस्याभू-,
न्निरव द्यः प्रियव्रतः ॥ १ ॥

प्रपेदे स शिशुत्वेऽपि,
नारदा दा त्मनोगतिम् ।
ध्यानसं यो जितस्वान्तो,
जहौ यो गी निजं गृहम् ॥ २ ॥

श्रुत्वैवं वी तरागं तं,
ब्रह्माम र गणैर्वृतः ।
आगत्ये ह्या त्मनिष्ठं तं,
बोधया मा स युक्तिभिः ॥३॥

विना बो ध मसौ पुत्र,
भिक्षुभा वो निरर्थकः ।
सज्ज्ञान म ग्नचित्तस्तु,
गृही सा धुः स्मृतो बुधैः ॥४॥

त्वमथो **अ** खिलं राज्य-,
मवाप्या **ती** वनिर्ममः ।
विजिते **न्द्र** य इष्टार्थं,
लप्स्यसे **यो** गिराडिव ॥ ५ ॥
एवं क **म** लजादिष्टः,
स जग्रा **हा** नुशासनम् ।
राज्यं का **मा** द्यसक्तोऽसौ,
चक्रे भू **यो** ऽपि धर्मतः ॥६॥
महसा **म** हता स्वस्य,
विदधेऽ **हो** निशामसौ ।
ध्वान्तस्यो **त्सा** दने पुंसां,
कः सन्दे **हो** महात्मसु ॥ ७ ॥
सिन्धूंस्त्व **म** हसा सप्त,
**हा** न्वितान्तरान् ।
विदधे **ब** लवानेष,
महीपा **लः** प्रियव्रतः ॥ ८ ॥
स राज्य **म** जहाज्ज्ञात्वा,
श्रेयसो **हा** निकारकम् ।
राज्यात्प्र **बु** द्धतत्त्वानां,
ह्यात्मसि **द्धि** र्मताधिका ॥९॥
हरिं श **र्म** प्रदं ध्यायन्,
वने मो **हा** दिवर्जितः ।
प्रपेदे **वी** ततृष्णोऽसौ,
भूपव **र्यो** हरेः पदम् ॥१०॥

तस्य ना **म** त आग्नीध्रः,
पुत्रः सौ **हा** र्दभागभूत् ।
नाभिः प्र **श** मभृच्चास्य,
सुतः श **क्ति** युतोऽभवत् ॥११॥
ईजे ध **र्म** पतिं विष्णुं,
पुत्राप्ती **च्छा** न्वितो ह्यसौ ।
क्रतौ वि **द्यु** च्छतज्योति-,
दैत्यारा **तिः** समागमत् ॥ १२ ॥
तं द्विजा **अ** स्तुवन्नत्वा,
नितान्तं **नि** र्मलान्तराः ।
त्वामाहु **र्दे** व शास्त्राणि,
ह्यनिर्दे **श्य** गुणात्मकम् ॥१३॥
स्मरन्ति **व** रदं ये त्वां,
ते वै प्रा **पुः** परम्पदम् ।
स्त्रीपुत्र **श्री** सुखाप्तीहां,
प्रमादं **मा** नयन्ति ते ॥ १४ ॥
अयं त **न** यकामस्त्वां,
यजते **मे** दिनीश्वरः ।
**या** भवन्माया,
ययास्या **त्मा** स्ति मोहितः ॥१५॥
उक्त्वैव **म** स्त्विति श्रीशे,
गते स्वे **हा** प्रपूरके ।
स राजा **द्रि** मिवोल्लङ्घ्य,
लेभे धी **धृत्** परां मुदम् ॥१६॥

प्रजज्ञे **म** नुजेन्द्रस्य,
तस्य गे **हे** हरिः स्वयम् ।
स्वजने **ष्वा** ह्वयं प्राप्तो–,
वृषभं **सो** ऽतिहर्षदम् ॥१७॥

ऋषभं **म** न्त्रिणां मान्यं,
सद्गुणा **ही** नमात्मजम् ।
स्वराज्ये **भ** वनिर्विण्णो,
महीभ **र्त्ता** भिषिक्तवान् ॥१८॥

स राज्य **श्री** श्रिया नून–,
मृषभो **नि** तरां बभौ ।
रम्योऽपि **वा** रिदो विद्यु–,
त्कृतावा **सः** स किम्पुनः ॥१९॥

वनवा **स** गतो नाभि–,
**तां** नृपश्रियम् ।
लेभे भ **ग** वतो भक्तौ,
कृतप्री **तिः** परं पदम् ॥ २० ॥

द्वेषान्नो **अ** करोद्वृष्टिं,
बद्धब्दा **नि** न्द्र उन्मदः ।
राष्ट्रे मे **रु** सुतासूनोः,
को न क्रु **द्धः** करोत्यघम् ॥२१॥

जिहीर्षुः **सु** रराड्गर्वं,
स्वराष्ट्रे **रा** जराडयम् ।
स्वयोगे **न** स्वभक्तानां,
कृतान **न्दो** ऽभ्यवर्षयत् ॥२२॥

स्वकृता **गो** निवृत्त्यर्थं,
विवाह **वि** धिना हरिः ।
स्वामम **न्दो** त्सवां तस्मै,
सानुरा **गो** ददौ सुताम् ॥२३॥

जयन्तीं **वि** दितां नाम्ना,
सप्रमो **दां** हरेः सुताम् ।
स प्राप्या **प** परां शोभां,
बलारा **तिः** शचीमिव ॥ २४ ॥

जयन्त्या **म** भवंस्तस्य,
पुत्राः शौ **री** ष्टदैवताः ।
शतं शु **चि** समाचारा,
मिथोहा **र्द** समन्विताः ॥२५॥

पितरं **म** नुते स स्व–,
मभिमा **नो** ज्झितान्तरम् ।
तं सस्ले **हं** तदा सर्वो,
गतत्रा **सः** प्रजाजनः ॥ २६ ॥

स्वं ज्येष्ठ **सु** तमावेश्य,
राज्ये भू **प** तिरात्मवान्
वनं स्व **र्गो** पमाङ्कोऽगा–,
वृषभो **भु** क्तभूसुखः ॥२७॥

भरतो **ज** न्मना शान्तः,
सानुरा **गो** महात्मसु ।
आत्माय **त्त** कृतस्वान्तः,
स निष्का **मः** क्षितिं ह्यपात् ॥२८॥

दैवे नि **हि** तसर्वेहः,
स्वशरी **र** गतस्पृहः ।
महार **ण्य** मिवोन्मत्तः,
प्रपेदे **ना** भिनन्दनः ॥ २९ ॥

तत्रर्ष **भः** प्रदग्धोऽभू-,
द्वह्निना **सु** भूतां द्विषा ।
ज्ञानान्वि **त** जनैश्चापि,
विधेस्ता **पाः** सुदुस्तराः ॥ ३० ॥

अर्हन् भू **प** तिरालोक्य,
तं स्वस **द्म** समीपतः ।
स्वधर्मं **ना** मतस्तस्य,
त्यक्तलो **भः** समैधयत् ॥ ३१ ॥

ऋषभं **प्र** यता ये वै,
नित्यं पू **जा** परा जनाः ।
सेवन्ते **प** रया भक्त्या,
तैर्विभू **तिः** करे कृता ॥ ३२ ॥

इति श्रीविष्णुचरितामृते-चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते –
ऋषभाङ्को नवमः सर्गः
सम्पूर्णः ॥ ९ ॥

## अथ हयग्रीवाङ्को दशमः सर्गः ।

चक्रेऽथो **अ** ब्जभूरिच्छन्,
यष्टुम **मृ** तदं हरिम् ।
लक्ष्म्याः प **त्युः** स्वचित्तान्तः,
स्मरणं **स** ज्जनस्तुतम् ॥ १ ॥

ज्ञात्वा स **र्व** जगत्स्वामी,
सर्वधी **हृत्** तदाशयम्
असह्यः **सिं** हवद्
हयदे **हः** समागमत् ॥ २ ॥

पालकं **स** र्वलोकानां,
सत्यस **न्धा** तिविश्रुतम् ।
नत्वापि **ता** महो मूर्ध्ना,
तुष्टुवे **स** ज्जनप्रियम् ॥ ३

ज्ञानर **न्धि** तकर्मापि,
कस्त्वां धी **मान्** परित्यजेत्
त्वद्ध्यान **स्थि** रचित्तानां,
न संसा **रः** सुदुस्तरः ॥ ४ ॥

प्रनष्टा **अ** भवन् वेदाः,
कालेनौ **जो** ऽन्वितेन ये ।
तत्प्राप्त्यै **दु** ष्करं ह्यन्यैः,
कर्तुं क **र्म** त्वमर्हसि ॥ ५ ॥

एष ह **र्ष** करः स्वेषां,
कृतत्रा **णः** स्वयम्भुवः ।
प्रपूर्या **शा** मगाद्विष्णुः,
पदम **स्ता** पदं स्वकम् ॥ ६ ॥

तन्नासा वि व:
र्याः श्वासैः श्रु तयोऽभवन् ।
क्रतून् धा ता विधायाभिः,
परमा त्मा नमिष्टवान् ॥७॥
समर्च्यः सु
दुर्जना रा तिरीश्वरः ।
असुरा रि र्हयग्रीवः,
सर्वैनो हा प्रसीदतु ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते-हय-
ग्रीवाङ्को दशमः सर्गः
सम्पूर्णः ॥ १० ॥

## अथ मत्स्याङ्क एकादशः सर्गः ।

चरित्रं गु ह्यमाख्यामि,
हरेः का रु ण्यवारिधेः ।
पुराणै र्गु णिनां मुख्यै—,
रु पवर्णितम् ॥ १ ॥
सत्यव्र त इति ख्यातः,
स्वात्मारा मो ऽभवन्नृपः ।
जनबा धा हरः पूर्वं
द्रविडे म दहृद् द्विषाम्॥२॥

एकदा स हरिं ध्यायन्,
कृतकृ त्यः सरित्तटे ।
स्वाञ्जलौ स मनुप्राप्तां,
शफरीं त्य कुमुद्यतः ॥ ३ ॥
मा मां भू प त्यजात्र त्वं,
हिंस्युः क्रू रा झषा हि माम् ।
एषा च क्र न्द तां निन्ये,
सोऽप्यका मः स्वमाश्रमम् ॥४॥
प्रपेदे नि तरां वृद्धिं,
सा राज्ञो मि षतः क्षणात् ।
अब्धावे षो ऽक्षिपच्चैनां,
शफरीं नि र्भृतान्तरः ॥ ५ ॥
तं भूप मि दमूचेऽसौ,
झषवे षः स्वयं हरिः ।
रात्रिर्वि स्र प्स्यति ब्राह्मी,
क्रव्यभु ग्वी र्यदा चिरात्॥६॥
वहन्ना वा म्बुधौ वक्ष्ये,
ज्ञानं ह्या च रितं च मे ।
यद्वाच स्प तिरप्याप्तुं,
न शक्नो ति क्षितीश्वर ॥ ७ ॥
स हरे रु पलेभेऽथो,
मत्स्याख्या दा त्मनो गतिम् ।
यया पा र भवक्लिष्टा,
नराणां धीः स्थिरा भवेत्॥८॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते-
मत्स्याङ्क एकादशः सर्गः
सम्पूर्णः ॥ ११ ॥

## अथ कूर्माङ्को द्वादशः सर्गः

यदामी **अ** भवँल्लोका,
दीनता **ग्र** स्तकान्तयः ।
दैवप्र **णी** तदारिघ्नाः,
सर्वे स्व **ग्रा** मणीमुखाः ॥ १ ॥

उपाय **म** विदित्वैव,
नानावा **णीः** प्रजल्पतः ।
मथितुं **श्री** पतिर्वार्धिं,
जगादे **मान्** समागतः ॥ २ ॥

वीरम्म **न्या**
ते सम्भू **यो** दधिं मुदा ।
**ने** त्रमादाय,
मथीभू **ता** द्रिमन्दराः ॥३॥

सस्रंसे **स** सुरैर्दैत्यै–,
र्विधृतोऽ **मी** भिरप्यसौ ।
अपूस्वाधा **र** विहीनोऽद्रि–,
र्गतप्रा **णः** पुमानिव ॥ ४ ॥

स्मृतस्तैः **स** गिरिं कूर्मो,
भूत्वोद **ह** रदीश्वरः
स्मृतोऽज **स्र** मसौ रक्षां,
कुरुतेऽ **मू** र्त्तदृङ् नृणाम् ॥५॥

द्वीपस्य **द्वौ** करे पृष्ठे,
मन्दरं **वि** ष्ठितं दधौ ।
निजनिः **श्वा** सविक्षुब्धे,
जगदा **त्मा** म्बुधौ चिरम् ॥६॥

समाप्ते **स** कले कार्ये,
प्रययौ **ह** र्षितैः स्तुतः ।
स सह **स्रा**
पङ्कजा **क्षः** स्वकं पदम् ॥ ७ ॥

संस्मृतः **स** र्वगीर्वाणान्,
**ह** धरो हरिः ।
ब्रह्मघ **स्र** क्षणः कृच्छ्रात्,
पुरा योऽ **पात्** स पातु नः ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते
कूर्माङ्को द्वादशः सर्गः
सम्पूर्णः ॥ १२ ॥

## अथ नृसिंहाङ्कस्त्रयोदशः सर्गः ।

दितेर्द्वा **आ** त्मजौ जातौ,
प्रबला **ब** थ कश्यपात् ।
क्रोडात्मा **र्त** प्रभुर्विष्णु–,
रेकं स्वै **नो** हरो न्यहन् ॥१॥
स्वानुजं **नि** हतं श्रुत्वा,
कोपसं **वृ** तचेतनः ।
लोकानु **त्ता** पयामास,
स दुरा **त्मा** दितेः सुतः ॥२॥
लोकेशैः **सं** स्तुतामिच्छन्,
स्वयशो **वृ** द्धिमुत्तमाम् ।
अश्रम **त्तः** समैहिष्ट,
विधातुं **स** महत्तपः ॥ ३ ॥
सतत **म्प्र** यतस्तेपे,
तपोऽसौ **म** न्दराचले ।
ध्यानान्त **र्द** त्तदृग् दिव्या,
धृतमौ **नः** शतं समाः ॥ ४ ॥
तं वेधा **अ** भिभाष्योचे,
त्वं किमी **हः** प्रतप्यसे ।
तपसा **सं** स्कृतोऽसि त्वं,
दैत्येन्द्र **व** रयेप्सितम् ॥ ५ ॥
न मां मू **र्त्त** जनो हन्तुं,
त्रिलोक्यां **को** ऽपि शक्नुयात् ।
दैत्यो दे **व** वरोऽन्यो वा,
रात्राव **ह्नि** तथा पुनः ॥ ६ ।
इमं व **र** मसौ दैत्यो,
ययाचे **नि** श्चयान्वितः ।
अस्त्वेवं **लो** कसृट् चोक्त्वा,
स तिरोऽ **ध** त्ते तत्क्षणम् ॥ ७ ॥
ततोऽसु **र** वरो जित्वा,
सुरान् क्षो **णी** श्वरांस्तथा ।
स राज **ध** र्मविद्राज्यं,
चक्रे वी **रः** प्रतापवान् ॥ ८ ॥
नाम्ना शा **सु** हिरण्यादि–,
कशिपुः **प्र** थितोऽसुरः ।
न ह्यास **सा** द युद्धार्थी,
चरन् भी **दः** कमप्यरिम् ॥ ९ ॥
तत्पुत्रः **प्र** थितो नाम्ना,
प्रह्लादः **स** मजायत ।
भगव **न्ना** मजापेऽभूत्,
स महा **त्मा** तिमोदभृत् ॥१०॥
संसार **वि** षयासक्तः,
सर्वत्रे **श्व** रदर्शकः ।
स चित्ते **धृ** तवान् विष्णुं,
ज्ञानदृ **ग्वि** मलान्तरः ॥११॥
नरो न **श्व** रदेहोऽयं,
हरिं को **भु** वि विस्मरेत् ।
सदेह **ग्वि** धशिक्षाभि–,
स्तद्गिरोऽ **भुः** समन्विताः ॥१२॥

स्मरन्तं **स** वेदात्मानं,
सदा स **त्क** मतत्परम् ।
दुःखह **र्त्ता** स्वभक्तानां,
विष्णुस्तं **स** ततं ह्यपात् ॥१३॥
भगव **त्कृ** तवैरस्तत्,
तस्य ता **तः** सुतेहितम् ।
न क्षमोऽ **सा** वभूत्सोढुं,
राहुर्वि **धु** मिवोदितम् ॥१४॥
प्राह ग **र्जं** न्नसौ त्वं मे,
वचोनि **हु** तवान् कथम् ।
त्वं विष्णो **र्ना** म गृह्णानो,
मृत्युमा **रा** दवाप्स्यसि ॥१५॥
यदाहू **य** समीपे तं,
सकृपा **णो** ऽतिकोपनः ।
हन्तुं मौ **न** धरं पुत्रं,
दैत्यवी **रः** समुद्यतः ॥ १६ ॥
तदा सा **अ** द्भुतैश्वर्यः,
स्तम्भतः **स** मभूद्धरिः ।
दैत्यं स **ङ्ख्ये** निहन्तुं तं,
निजमा **यो** ग्ररूपधृत् ॥ १७ ॥
युद्धेऽति **प्र** बलं विष्णुः,
स्वपुंसा **मे** करक्षकः ।
तं सन्ध्या **या** महञ्छत्रुं,
नृसिंहा **त्मा** महासुरम् ॥ १८ ॥

विबुधा **वि** गतातङ्का-,
स्तुष्टुवुः **शि** वदं हरिम् ।
दिष्ट्या दु **ष्टः** प्रनष्टोऽयं,
दुश्चेष्टः **शि** ष्टकष्टदः ॥ १९ ॥
भक्ताभी **ष्ट** प्रदः सोऽस्मान्,
पातु वै **कृ** पया हरे ।
अदधा **च्छु** भदं रूपं,
भवान् रो **चिः** समन्वितम् ॥२०॥
सेवते **सि** द्धिदं यस्त्वां,
ज्ञानसि **द्धा** र्चितं सदा ।
स कृता **र्थः** स्मृतो नूनं,
समस्तैः **सि** द्धसत्तमैः ॥२१॥
ज्ञानवृ **द्ध** जनैर्ज्ञेयं,
स्वात्मनः **स** हचारिणम् ।
प्राप्तुम **ङ्क** गतं त्वां वै,
नास्ति स्व **ल्पः** परिश्रमः ॥ २२ ॥
स्तुत्वेत्थं **सि** द्धसङ्घेऽस्मिन्,
गते वृ **द्धि** करं सताम् ।
तं प्रह्ला **दः** प्रणम्याथो,
ह्यस्तौद्धिं **सि** तसद्विषम् ॥२३॥
चित्तशु **द्धि** युता ज्ञातुं,
यं शक्ताः **सा** धवोऽपि न ।
तं त्वां वो **ध** विहीनोऽहं,
जातिही **नः** कथं स्तुवे ॥२४॥

यस्त्वां नि वृ त्तसर्वेहो,
दिव्यवे षा न्वितं स्मरेत्।
पुरुषो ही नजन्मापि,
सस्मृतो वृ द्धसम्मतः ॥२५॥
जगद्वि ष मशीलानां,
त्वं सतां भो गमोक्षदः।
विभूषे वि श्वयात्रायै,
ब्रह्मवि ष्णु शिवाभिधाम्॥२६॥
सोऽतिनि वृ तिमाप्नोति,
दिव्यभू ष णभूषितम्।
भजते प द्मपत्राक्षं,
यस्त्वां स र्वा मरार्चितम् ॥२७॥
जगद्वि वृ द्धिसद्बीजं,
सर्वदो षो त्तमौषधम्।
त्वया वे द विदां वेद्यः,
सदाचा रः प्रचार्यते ॥ २८ ॥
एवं स्तु व न्तमाश्वास्य,
स सिंहा र्ध वपुर्धरः।
जगादै नो हरःस्वानां,
प्रह्लादं व चनं हरिः॥ २९ ॥
वत्स व र्ध य सद्धर्मं,
मा धर्मे मा नसंनिधाः
रक्षां दी न जनस्य त्वं,
कुरुनि श्च लमानसः ॥३०॥

भूतेषु वि नयोपेतो,
भोगेषु वि गतस्पृहः।
त्वमस क्तः स्वकं राज्यं,
पाहि वि श्रु तसद्गुणः ॥ ३१ ॥
आश्राव्ये ति स्वभक्तं स,
नृसिंहः सा रवद्वचः।
अन्तर्धा ग तवांस्तूर्ण–,
मकूपा रः कृपाम्भसाम्॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ
स्वामि-लक्ष्मणशास्त्रिप्रणीते
नृसिंहाङ्क-त्रयोदशः सर्गः
सम्पूर्णः॥ १३ ॥

## अथ हर्यङ्कश्चतुर्दशः सर्गः।

त्रिकूटः सु रसेव्योऽद्रि–,
र्बभूव भु वि विश्रुतः।
गिरिरा जो पमः कोऽपि,
जनानां दु र्गमो भृशम् ॥१॥
रतिव र्ध नसद्बीजां,
श्रियं मे रो रिवोत्तमाम्।
को वक्तुं वा ग्भिरस्याद्रे–,
रपि वा ग्मी क्षमो भवेत् ॥ २ ॥

तत्राद्रौ म दसंयुक्तो,
ज्ञातिव्यू हे न संवृतः ।
वारणे न्द्रो ऽवसत्कोऽपि,
स्वप्रभा व जितद्विषन् ॥ ३ ॥
ग्राहेण सु दृढं चासा–,
वात्तपा दो जले क्वचित् ।
प्रतुष्टा व
नियता सुः श्रियः पतिम् ॥४॥
देवज्ञा नै कगम्योऽसि,
निर्व्याज क रुणानिधिः ।
त्वं नाना रू पधृत्स्वीयान्,
पास्यरू पो ऽपि सर्वदा ॥ ५ ॥
बृहत्त्वं बृ हतां मध्ये,
चित्तगे ह कृतालयः ।
ध्याता चि द्रू पिणस्ते वै,
गतता पः पुमान्भवेत् ॥ ६ ॥
तेनेत्थं शि वदः स्वानां,
वचसा पि स्तुतो हरिः ।
विमोच्य वि पदस्तं स्वं,
सतामि ष्टः पदं ययौ ॥ ७ ॥
स्वभक्त प्र णयाधीनो,
हरिः शो का पहारकः ।
दुःखना श करः स्वानां,
सर्वदा नः प्रसीदतात् ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते
हर्यङ्कश्चतुर्दशः सर्गः
सम्पूर्णः ॥ १४ ॥

## अथ वामनाङ्कः पञ्चदशः सर्गः ।

कृतादा ओ जसा युक्तो,
ऽ ज नि मानसात् ।
मरीचि स्ते जसा यो वै,
देवरा जो ऽपरोऽभवत् ॥१॥
तस्याति द्यु तिभृत् पुत्रः,
प्रजाप ति रभूद् बुधः ।
कश्यपो ध मतत्त्वज्ञः,
सदा शू रः स्वकर्मसु ॥ २ ॥
अदितिः प्र थिता नाम्ना,
सुरूपा का पि कामिनी ।
अभूत्स्वे शा नुगा तस्य,
विजिता त्मा खिलेन्द्रिया ॥३॥
देवानां प्र थमं या वै,
पश्चान्मा ता हरेरभूत् ।
तस्माज्जा प क्रिया तस्या,
नाम्नां ह्ये नः प्रणाशिनी ॥ ४ ॥

सपत्न्या **ऋ** द्धिमालोक्य,
तस्या वृ **द्धः** समत्सरः ।
कोपो वि **स्प** ष्टलक्ष्माभू–,
च्चित्तेशि **ष्टा** तिगर्हितः ॥ ५ ॥

सैकदा **क्ष** मया युक्तं,
पतिं वी **रो** त्तमावदत् ।
स्वामिंस्त्वं **म** ह्यमाख्याहि,
कञ्चिन्म **न्त्र** मनुत्तमम् ॥ ६ ॥

दैत्यैर्दु **श्च** रितैरेते,
देवा इ **न्द्रां** शुमन्मुखाः ।
विजिताः **शु** द्धकर्माणो,
ह्यपि द **र्भा** ग्रबुद्धयः ॥ ७ ॥

इन्द्रभा **स्क** रमुख्यानां,
शिक्षां त्वं **र** क्षणक्षमाम् ।
दत्त्वा मे **द्यु** तरूभूया,
यत्ते प्री **तिः** स्थिरा मयि ॥८॥

श्रुत्वा सा **अ** वदत्तां वै,
कश्यपोऽ **मृ** तवद्वचः ।
दैवजा **तां** विपत्तिं को,
विजेतुं **शू** र इच्छति ॥ ९ ॥

सर्वोप **द्र** ञ्जकः स्वानां,
हरिरे **वो** च्यते बुधैः ।
भज तं **भा** वसंयुक्ता,
त्वं ससू **नुः** शिवप्रदम् ॥१०॥

स एव **श** क्नुयात्तूर्णं,
दुःख ना **श** यितुं तव ।
यथार्के **बि** म्बजं हर्तुं,
तापमि **न्दुः** परं प्रभुः ॥११॥

प्रययौ **सु** ष्ठु संप्रोच्य,
तीर्थती **रे** विधानतः ।
कर्त्तुमी **श्व** र तुष्ट्यर्थं,
मुनिवी **रः** पयोव्रतम् ॥१२॥

सा क्रि या **औ** चितीः कृत्वा,
नित्यं दो **ष** विवर्जिता ।
तन्निर्बा **धं** व्रतं चक्रे,
देवानां **ज** ननी मुदा ॥१३॥

जगा दा **ग** त्य देवेश–,
स्तेन प्री **तः** प्रियं वचः ।
मदीयं **से** वनं
फलहे **तुः** खलूदितः ॥१४॥

यतिष्ये **स** र्वथा कर्तुं,
तव कृ **त्य** महं ध्रुवम् ।
कः शक्तो **ध** र्मतो युद्धे,
जेतुं ध **र्म** परं बलिम् ॥१५॥

स्वं लोकं **प** द्मनाभोऽगाद्,
दत्त्वा स्वा **रा** धनाफलम् ।
प्रीते च **क्र** धरे पुंसां,
कोऽस्ति का **मः** सुदुर्लभः ॥१६॥

वामनोऽ **भू** दसौ नाम्ना,
हरिर्वै **त** नयोऽदितेः ।
यन्नाम **भ** जतां नैव,
शत्रुजं **व्य** सनं भवेत् ॥१७॥
भिक्षितुं **भ** गवान् भूमिं,
बलेर्भे **व** नमाययौ ।
न किं त **न्ना** म चित्रं स्याद्,
यच्छ्रीना **थः** स याचकः ॥१८॥
भिक्षुरू **प** धरस्यास्य,
विष्णोः पा **व** न कर्मणः ।
त्यक्तमा **नः** समानर्च,
बलिर्वै **पा** दयोर्युगम् ॥१९॥
बलेः स **व** स्यामास,
भूमेरे **नो** हरो हरिः ।
स्वपादे **न** मितं स्थाना-,
मनुकू **लः** पदत्रयम् ॥२०॥
उद्यतं **का** ङ्क्षितं दातुं,
तस्मै वा **म** नरूपिणे ।
स्वशिष्यं **हा** र्द विद्विष्णो-,
र्बभाषे **का** व्य आगतः ॥२१॥
राजंस्त्व **म** वनिं मा दाः,
विष्णवे **कृ** त्रिमात्मने ।
त्वद् द्विष **त्का** र्यं कर्त्रेऽस्मै,
मत्सिद्धा **न्तः** किलास्त्यसौ ॥२२॥

अश्रुत्वा **का** व्यवाचं तां,
सत्यका **मः** क्षितिं बलिः ।
प्रदातु **का** म आदत्त,
करे वि **म** लमम्बु सः ॥२३॥
तत्कार्ये **प्र** स्तुते पुंसां,
हर्षना **दः** समुत्थितः ।
ववृधे **प्र** लयाम्भोवत्,
प्रपूर्वो **भुः** सतां च सः ॥२४॥
स्वपाद **यु** गलेनैव,
त्रिदिवं **गां** च वामनः ।
चक्रमे **दि** तिजारीणां,
देवानां **कृ** त्यसाधकः ॥२५॥
दितिज **द्यु** मणिर्भूयो,
मुदा स्वं **गा** त्रमार्पिपत् ।
कृच्छ्रेऽपि **व** शिनामात्मा,
न शोका **र्तो** भवेत्खलु ॥२६॥
तं सज्ज **नै** कसंसेव्यो,
वामनः **क** रुणाकरः ।
बभाषे **मा** शुचं कार्षी-,
स्त्वं दैते **यो** ऽपि मे प्रियः ॥२७॥
सुतले **म** णिभिर्दीप्ते,
शोकमो **हा** दिवर्जिते ।
पश्यन्मां **शा** र्मदं त्वं वै,
शोकही **नः** सदा वस ॥ २८ ॥

स्वपञ्यां **दु** ग्धपानार्थं,
वर्षार्धा **र्ध** वया रुदन् ।
सोऽतिसा **रो** ऽतिदूरेऽनो,
व्रजना **था** त्मजोऽक्षिपत्॥२३॥
सोऽर्जुनौ **प** र्वतप्रांशू,
निपात्या **रा** द्वेक्षिणाम् ।
चक्रेऽरि **जि** त्वरः पुंसां,
जगत्ता **तः** सुविस्मयम् ॥२४॥
स्वमुखे **वि** विधं कृष्णः,
स्वाम्बां वि **श्व** मदर्शयत् ।
क्रीडा वि **मू** ढलोकानां,
हिताया **र्त्ति** हरोऽकरोत्॥२५॥
तत्प्रसू **र्म** न्थनीं भित्वा,
द्रुतं गे **हा** दनुद्रुता ।
बबन्धा **मू** ढधीः कृष्णं,
दामपू **र्त्ति** श्रितश्रमा॥२६॥
दैत्यम **र्दी** न्यहन् वत्सं,
बकं चा **प्र** जनस्तुतः ।
गताव **मू** च वैकुण्ठं,
सज्जना **र्त्ति** प्रदावपि ॥२७॥
अघासु **र** निहा कृष्ण–,
स्तद्विषा **मू** र्च्छितान् सखीन् ।
स्वभक्ता **र्त्ति** हृदुज्जीव्य,
बभौ श्री **मान्** कृपानिधिः॥२८॥

कृष्णोऽसा **अ** मदं कर्तुं,
शक्रं मा **ने** न सम्भृतम् ।
तत् क्रतुं **क** र्तुमुद्युक्तां,
बन्धुता **मू** चिवान्निजाम्॥२९॥
प्रमोदा **र्त्ति** प्रदं कर्म,
वृथा सु **र** वरार्चनम् ।
गवां भ **व्य** तमो यज्ञ–,
स्त्रातुं श **क्तः** स एव नः॥३०॥
स्वीचक्रुः **श** र्मदां गोपा–,
स्तद्वाचं **त** त्त्वदर्शिनीम् ।
कृष्णेना **मू** ढचित्तानां,
चित्तस्फू **र्त्तिः** कृता तथा॥३१॥
: **श** क्रयज्ञं तं
निषिध्यै **ता** दृशर्द्धिभिः ।
गोवर्ध **न** मखं स्वानां,
कृतमा **नः** स्वचीकरत्॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते
कृष्णाङ्कोऽष्टाविंशः सर्गः
सम्पूर्णः ॥ २८ ॥

## अथ कृष्णाङ्क एकोनत्रिंशः सर्गः।

शक्रोऽथो **ए** धितक्रोधो,
जितलो **को** ऽनुजघ्निवान् ।

मारुते नै धितान्मेघान्,
गोकुलौ कः क्षयक्षमान् ॥ १ ॥
स्फूर्जथू स हितासारै-,
र्गोपा गा वः प्रपीडिताः ।
निर्भयौ कः प्रदं कृष्णं,
शरणं किं न तेऽगमन् ॥ २ ॥
अयं तो य धरव्यूहः,
शक्रद त्त निदेशतः ।
दुःखं त्व त्प दभक्तेभ्यो,
ददाती द मपाकुरु ॥ ३ ॥
तद्दैन्य म वधार्यासौ,
स्वादेशा नु व्रतं व्रजम् ।
उद्धृत्या त्त त्वरोऽरक्ष-,
न्महाया मम् महीधरम् ॥ ४ ॥
गर्वं पु लो मजाभर्तु-,
र्हर्तुं मे क करे गिरिम् ।
सप्ताहं ब लभृद् बभ्रे,
दीनब न्धु र्निरन्तरम् ॥ ५ ॥
नष्टे स्व र्लो कपादिष्टे,
घनौघे क ष्टदे प्रभुः ।
गोवर्ध ना चलं भूमौ,
कृपापा थो निधिर्न्यधात् ॥ ६ ॥

गताभि मा न इन्द्रोऽसौ,
नत्वा मा ध वमब्रवीत् ।
त्वत्प्रभा वो हि दुर्ज्ञेयो,
भजतां भ यहा भवान् ॥७॥
त्वमव्य क्त स्वरूपोऽसि,
व्यक्तोऽसि व नवासिनाम्
भक्तव त्स लता हेतु-,
र्यद्गोपा लः प्रभोऽभवः ॥८॥
तदैव सु रभिः प्राप्ता,
ब्रह्मणो व चनाद् व्रजम् ।
प्रेमपू र्ण गिरा चासौ,
वासुदे व मभाषत ॥ ९ ॥
गर्वपू र्णो ऽकरोत् पापं,
शक्रो मो हे न यत्तव ।
तत्क्षन्तुं मा धवार्हस्त्वं,
कृपापा ङ्गो त्सुकस्य ते ॥ १० ॥
देवादे व भरार्त्तायाः,
भुवो भा रा पनुत्तये ।
जातोऽस्य ङ्क यदोर्वंशे,
त्वं देवै श्च भुवार्थितः॥११॥
त्वं गोवि न्द इति स्वाख्यां,
लब्धा गो ना यकोऽसि यत् ।
भवत्य ङ्क गवां स्वाम्यं,
स्वर्प्यते दी नवत्सले ॥ १२ ॥

इत्थं ता **वी** श्वरं स्तुत्वा,
गतौ सु **र** भिवक्त्रिणौ ।
गतमो **हा** जनाः कृष्णं,
मेनिरे **वि** ष्णुमेव तम् ॥१३॥

एकदो **ष** सि गोविन्दः,
सहरा **मः** सगोधनः ।
प्रययौ **शू** न्यकान्तारं,
मुनिमा **न्यो** त्तमक्रियः ॥१४॥

धेनुकं **धू** तपादाग्रं,
सताम्पा **ता** हलायुधः ।
जघाना **शी** विषप्रख्यं,
नराहा **र** करं सदा ॥ १५ ॥

स्वादूनि **च** तदा खादन्,
गोपास्ता **ल** फलान्यमी ।
कृष्णो नि **श्च** लधीरागात्,
सगोपा **लः** पुनर्व्रजम् ॥१६॥

भ्रातरा **अ** परेद्युस्तौ,
रामरा **मा** नुजौ व्रजात् ।
अरण्या **नी** मभुक्त्वैव,
महाभी **मा** मभीयतुः ॥१७॥

गोपान् व **न** दवत्रस्तान्,
निजपा **दो** पसंश्रितान् ।
कृपया **मा** धवोऽरक्षद्,
हृतदै **न्यो** ऽतिदुःखिनाम् ॥१८॥

अतिका **लो** द्गतश्रान्त्या,
क्षुधा चा **क्र** र्षिता भृशम् ।
गोपाः स्व **स्वा** मिनं कृष्णं,
प्रणम्या **मी** समब्रुवन् ॥१९॥

गतरा **त्रि** कृताहारा–,
नस्मान् का **लो** द्भवा क्षुधा ।
बाधते **क** ल्पयोपायं,
जगतां **धृत्** पिता भवान् ॥२०॥

गोपा भू **सु** रभार्याभ्यो,
दातुका **मे** न दर्शनम् ।
प्रेषिता **धा** म कृष्णेन,
ते तासा **मे** त्य चाब्रुवन् ॥२१॥

कृष्णस्या **ध** र्मिणां द्वेष्टुः,
पादपू **ज्जो** त्सुका वयम् ।
कामं सा **ध** यतामुष्य,
स वै मा **न्यः** सुरैरपि ॥ २२ ॥

ताः कृष्णं **स** मुपायातं,
श्रुत्वा स **त्य** व्रताः स्त्रियः ।
गत्वास्मै **मे** ध्यमृष्टान्नं,
सानुरो **धा** मुदार्पिपन् ॥२३॥

श्रीरमा **ध** वनिर्देशाद्,
द्विजदा **रा** ययुर्गृहान् ।
कृष्णो गो **ध** न्युत्सायात्,
कृताहा **रः** पुनर्व्रजम् ॥२४॥

समाया ते ऽथ हेमन्ते,
देवकी जो ऽपरेऽहनि ।
गोपगो वृ न्दसंयुक्तो,
हृद्यवे षो ऽगमद्वनम् ॥ २५ ॥

स्वद्रुम द्यु द्रुमस्पर्धि,
वनं वि ति सिरं रुचा ।
कुर्वन्स ध र्मसोदर्या—,
तटं वी रः समासदत् ॥२६॥

सविषं स लिलं तस्याः,
पीत्वा स र्व शिशुव्रजः ।
निश्चेष्टः शा यितस्तीरे,
महेन्द्रा स्त्र हतद्रुवत् ॥ २७ ॥

सर्वासु भू दपेयापां,
यमुनां तां विषान्विताम् ।
स्वभक्त व रदः शुद्धां,
कर्तुं वी रः समैहत ॥ २८ ॥

सञ्जीव्य प्र मृतान् गोपान्,
भक्तानु ग्र हकृत् प्रभुः ।
बहिर्म हो रगं नद्या—,
निक्षेप्तुं नि श्चयं व्यधात्॥२९॥

भूरुहा ग्र मथारुह्य,
सर्पेगे हो पकण्ठजम् ।
जले दि व्य बलोऽपप्तत्,
विक्षिप्तो ग्रो र्मिसङ्कुले ॥ ३० ॥

निर्गन्तुं नै कशीर्षं स—,
कालियं क रुणाकरः ।
व्रजौकः शृ ङ्गिणां शत्रुं,
कृतर ङ्गो ऽनुशिष्टवान् ॥३१॥

गोबाल ग णमादाय,
दर्शितो दा रविक्रमः ।
व्रजं स्वा ग्र जयुक् सायं,
श्रीकृष्णोऽ जः समागमत् ॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
कृष्णाङ्क एकोनत्रिंशः सर्गः
सम्पूर्णः ॥ २९ ॥

## अथ कृष्णाङ्कस्त्रिंशः सर्गः ।

श्रीकृष्ण च रणाम्भोजं,
द्रष्टुं स्तो तु मनाश्च तम् ।
सुरर्षि र्मू र्त्तमात्मेशं,
प्राप्तः स्वा र्ति हरं कचित् ॥१॥

नारद श्च रणौ नत्वा,
विश्वपा तु रमापत ।
गोपते बा लकं त्वां वै,
शास्त्राण्या हु र्जगद्गुरुम् ॥ २ ॥

कर्माण्या श्च र्यकारीणि,
कस्ते ज्ञा तु मिहार्हति ।
त्वां गुणै र्व्यू ढमप्येषा,
श्रुतिरा ह प्रभोऽगुणम् ॥ ३ ॥
ये भेजु श्च रणाब्जं ते,
चित्त कौ तु हलप्रदम् ।
जनान् नि र्ग त तृष्णांस्तान्,
का विभू तिः प्रलोभयेत् ॥ ४ ॥
स्वज्ञान च क्षुषा सर्वं,
विश्वं ज्ञा तु मलं क्षमाः ।
योगेश्व रा निरीक्षन्ते,
त्वां सर्वा त्मा नमात्मनि ॥ ५ ॥
त्वं चरा च रविश्वस्य,
पतिर्हि तु
तवावि र्भा व एवायं,
भवभा व नकारणम् ॥ ६ ॥
षण्मासै श्च ध्रुवो लेभे,
यत्पदं तु ष्टिकृत्तव ।
तच्चतु र्वे दविज्ञोऽपि,
गन्तुं प द मनीश्वरः ॥ ७ ॥
प्रह्लादं वि दितात्मानं,
स्वकीया दे शकारिणम् ।
हिरण्य क शिपुं हत्वा,
कृपया पात् पुरा भवान् ॥८॥
दैत्यान् कं स मुखान् हत्वा,
जगता मा र्त्तिकारकान् ।
हर्ता दे व भुवो भारं,
भवाना र्त्तो पतापहृत् ॥ ९ ॥
स्तुत्वेत्थं नि यतात्माऽसौ,
निर्ययौ वृ षिसत्तमः ।
निजस त्ता कृतानन्दो,
जगदा त्मा व्रजेऽवसत् ॥१०॥
जिघांसु र्दु र्बलान् गोपान्,
व्योमम् र्ज खलं हरिः ।
दैवसं यो गसम्प्राप्त,
दैत्येन्द्रं दु र्जनं न्यहन् ॥११॥
क्रीडाक र ण निष्णातः,
प्रलम्बं ति मिराटनम् ।
सदति क्र मकर्त्तारं,
न्यहन् रा मः क्वचिद्वने ॥ १२ ॥
न्यवधी दु र्मदं यक्षं,
श्रीहरि र्ल लना हरम् ।
परस्त्री भो गकामाख्यात्,
को नष्टो दु र्नयान्न वै ॥१३॥
पशु व र्ग द्विषं दैत्यं,
वृषं दा मो दरोऽवधीत् ।
अहो सु दु र्जनेनापि,
तेन स्व र्गो जितः क्षणात् ॥१४॥

केशिनं **दु** र्जयं कृष्ण-,
त्रिदशा **रा** तिमुल्बणम् ।
हत्वा न्य **वा** सयत्स्वर्गे,
सुखा **सो** चितेऽचिरात् ॥१५॥

एकदा **दु** र्गमारण्ये,
दुर्गामा **रा** ध्य भक्तितः ।
गोपाः प **रि** जनोपेताः,
सर्पसिं **हा** न्वितेऽवसन् ॥१६॥

शयानं **शु** द्धकर्माणं,
व्रजेशं **भा** ग्यनोदितः ।
प्रलम्बा **ङ्गो** ऽग्रसीत्कश्चिद्-,
द्रुममू **लो** त्थितः शयुः ॥१७॥

कृष्णाङ्घ्रि **क** मलस्पर्शाद्,
विशापोऽ **सा** वगात् पुनः ।
विद्याध **र** पतिः स्वर्गं,
मनोज्ञा **ङ्गः** सुदर्शनः ॥१८॥

निशम्या **सु** रराट् कृष्णं,
व्रजं या **त** मरिं निजम् ।
कंसो ग **न्तु** मथादिक्षद्,
गान्दिन्या **स्त** नयं व्रजम् ॥१९॥

शत्रुं ह **न्तु** महं तात,
प्रयतेऽ **व** हितो भृशम् ।
न विव **र्ध** यितुं योग्यो,
बलही **नः** खलु द्विषन् ॥२०॥

त्वममू **इ** ह सन्द्रष्टुं,
मन्मखे **न्द्र** महोत्सवम् ।
गव्यैश्च **क** लशान् भृत्वा,
यज्ञक **र्मा** र्थमानय ॥२१॥

आगतौ **म** ल्लवर्य्यैस्तौ,
विद्युद्दी **हा** समेहितैः ।
यमलो **क** गतौ कृत्वा,
सिद्धक **र्मा** सुखं शये ॥२२॥

इत्थं तं **कृ** तसङ्कल्पं,
कंसं वी **त** तनुद्युतिम् ।
अक्रूरः **क** थयामास,
सत्यध **र्मा** त्मकं वचः ॥२३॥

राजन् प्र **कृ** तसर्वार्थे,
किं विधा **ता** विधास्यति ।
कः पूर्वं **ग** दितुं शक्तो,
यतो वा **मः** स्वयं विधिः ॥२४॥

अहं ता **उ** दिते सूर्ये,
यास्याम्यु **द्भ** टपौरुषौ ।
गुप्तभा **वः** समानेतुं,
सरथः **सु** खमस्तु ते ॥२५॥

प्रातर्न **न्द** व्रजं तूर्णं,
यदुवी **रः** प्रयातवान् ।
व्रजेश **सु** तयोः स्थित्या,
सदान **न्दो** दयास्पदम् ॥२६॥

दृष्ट्वाक्रू र स्तदा गोष्ठं,
मेने य त्न मनिष्फलम्
दर्शनं ना म यत्तस्य,
दृष्टिला भः परः स्मृतः ॥२७॥
गोकुलं सु खदं सायं,
गोगोपा लो पसंश्रितम् ।
सर्वार्थ च तुरः प्राप्तः,
श्रमदू नः श्वफल्कजः॥२८॥
दृष्ट्वासा अ तुलं लेभे,
हर्षम क्रो दयद्युतिम् ।
सरामं वा रिदश्यामं,
कृष्णं व्र ज जनप्रियम्॥२९॥
स्वजन्म स फलं मेने,
नः क्षयक्षमम् ।
श्रुत्वासौ शा ङ्गिणां नादं,
वेणुस ङ्गी तसङ्गतम्॥३०॥
यशोदा ज मथो नत्वा,
बभाषे य दुनन्दनः ।
भवभ्रा न्तः पुमान्मादृक्,
चिरात्त्वां स मुपस्थितः॥३१॥
कृष्ण स र्व सुरारीणां,
समूहं वि लयं नय ।
सर्वस ज्ज नरक्षायै,
जय मा धी न्द्रमोहन॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते
कृष्णाङ्कस्त्रिंशः सर्गः
सम्पूर्णः ॥ ३० ॥

## अथ कृष्णाङ्क एकत्रिंशः सर्गः ।

स्तुत्वासौ सु खसम्प्रश्नं,
पप्रच्छा व हितो व्रजे ।
कृष्णं पू र्ण मनस्तर्षः,
पूर्णग्लौ बि म्बदर्शनम् ॥ १ ॥
उवाचे न्दु कुलोत्तंस—,
र क्षकं सताम् ।
मथुरा क्षो णिनाथो यत्,
कंसोऽस भ्यः समादिशत् ॥२॥
यद्वयं स र्वतो दुःखं,
कंसात्स र्व जनद्विषः ।
प्राप्नुमो वा मदैवास्तद्,
वक्तुं वा गी श्वरी कुतः ॥ ३ ॥
कंसं वि श्व जनारातिं,
हत्त्वा वी रे शमानिनम् ।
कुरु वि श्व स्य शं यत्ते,
मतोऽपा रः पराक्रमः ॥ ४ ॥

कृष्णं रा मं मथारोप्य,
श्रेष्ठवा हा न्विते रथे
यमुना ह्र दमक्रूरः
सम्प्राप्तो दो षवर्जितम् ॥ ५ ॥
याते रा म युते कृष्णे,
शोकमो हा कुलेन्द्रियः ।
गोपीपू ग स्तदा मुह्यत्,
कः शोका र्तो न मुह्यति ॥ ६ ॥
ख म ध्यगेऽक्रूरः,
श्रान्तवा हा न्ववेक्षया ।
रम्येऽर्क भू तटे तस्थौ,
मुहूर्त्तं तो यशीतले ॥ ७ ॥
कृष्णं रा म मथावेश्य,
रथे सिं हा दिनिर्भयः ।
सस्नौ सु नि र्मले नीरे,
विगता धिः श्वफल्कजः ॥८॥
शेषाङ्क कु ट्टिमासीनं,
संस्तुतं मु निपुङ्गवैः ।
ददर्शा दः सरित्तीरे,
स श्रीवै कु ण्ठनायकम् ॥ ९ ॥
पुनर्नं न्द सुतौ तत्र,
दृष्ट्वाक्रू रः सुविस्मितः ।
अत्र तौ कु त आयातौ,
मोहोऽस्म न्दः किमस्ति मे॥१०॥

विराड्रू प मथो वीक्ष्य,
गतान्त र्जं गतीत्रयम् ।
नष्टदै न्यः स तुष्टाव,
तत्कृपा पा ङ्गवीक्षितैः ॥११॥
जगत्पा व नकर्तारं,
स्वजनै नो विनाशकम् ।
दीनानां नि त्यबन्धुं त्वां,
कः सुधी लः पुमांस्त्यजेत्॥१२॥
त्वां वेदा अ मृतं प्राहुः,
स्वजना मृ तदत्वतः ।
वेदगी तां भवव्याप्तिं,
ज्ञातुमी शो नरः कथम्॥१३॥
मृत्यूनां मृ त्युकर्त्तारं,
विनिर्मि त तजगत्रयम् ।
दध्युर्दे व वरं त्वां ये,
गतिं प्रा पुः परामिमे ॥ १४ ॥
निर्गुणं स गुणाकारं,
त्वामपू र्वं गुणाकरम् ।
मादृशोऽ ज्ञः कथं शक्तो,
विज्ञातुं स र्वसाक्षिणम् ॥१५॥
देव स र्वं नियन्तारं,
मुक्तिहे तो र्महाभयात् ।
भजते मु क्तिदं त्वां यः,
स निर्दुः खः क्षणाद्भवेत् ॥१६॥

स्तुत्वेत्थं **सु** व्रतोऽक्रूरो,
मौनमा **ल** म्बते स्म सः ।
पद्मना **भः** किलादृश्यो,
दृष्टेर **सु** भूतामभूत्॥१७॥

पुनरा **व्र** ज्य विश्रान्तः,
**तः** श्वफल्कजः ।
रथेन **सि** द्धकार्यत्वाद्,
बद्धश्र **द्धः** पुरीमगात्॥१८॥

तौ व्र जे **श** सुतौ पुर्य्या-,
बहिः पि **त्रु** पलालितौ ।
स्थितौ पू **जि** तपादाब्जौ,
गोपैः स्व **च्छ** जलाप्लुतौ ॥१९॥

निजश **त्रु** मुपानीतं,
श्रुत्वा जा **ता** दरो ह्यमुम् ।
शश्लाघे **प** र्यतुष्यच्च,
कंसः स्वै **नः** प्रनष्टधीः ॥ २० ॥

पुरीम **न्य** दिने द्रष्टुं,
दुर्जनो **ग्रो** गदाग्रजः ।
निरायु **धो** ऽविशत्सार्यं,
सरामो **दु** ष्टदुर्जयः ॥ २१ ॥

दुष्टम **म्ब**
हत्वा वी **रो** महागजम् ।
रङ्गमा **श्व** थ गोविन्दः,
ससहो **त्थ** सखोऽविशत्॥२२॥

धा **श्वा** ब्रवीत्कृष्णं,
मल्लश्चा **णू** रनामकः ।
युवां वी **रा** वरातीनां,
मर्मर **न्ध्र** करौ भिया॥२३॥

त्वां युद्ध **नि** पुणं श्रुत्वा,
गोपाले **षू** त्तमौजसम् ।
नियुद्ध **द** र्शनाकाङ्क्षी-,
राजासौ **नः** समाह्वयत्॥२४॥

त्वं मया **स** ह युध्यस्व,
**ह** लिना सह ।
चतुर **स्रा** कृतौ रङ्गे,
मन्दार्का **र्चिः** कृतातपे॥ २५ ॥

इत्युक्त्वा **स** नियुद्धाय,
प्राप्तो दी **प्त** प्रभं प्रभुम् ।
यन्मर्तुं **जि** ह्मगारातिं,
किं द्विजि **ह्वः** प्रयाति न ॥२६॥

जिहिंस **स** हसा शत्रुं,
कृष्णो गु **प्तै** नसां हरः ।
यस्य वे **धाः** स्वयं वाम-,
स्तत्कृतं **स** फलं कुतः ॥२७॥

विलोक्या **प्र** तमान्मल्लान्,
सर्वाने **वा** स्तमीयुषः ।
कंसो वि **हृ** तसङ्कल्पो,
बुद्धिही **नः** क्षणादभूत्॥२८॥

स्वानसा अ नुगान् प्रोचे,
नयता मू पुराद् बहिः।
मज्जना र्ति प्रदौ तूर्णं
वित्तं ह र त तत्पितुः ॥२९॥

श्रुत्वेत्यू न सतेरुक्तिं,
निहता घो न्यपातयत्।
हरिर्वि चि त्रमुत्प्लुत्य,
कंसं का न्त्यो ज्झितं क्षितौ॥३०॥

भ यदे कंसे,
मुदिता थ द्वो भृशम्।
सरामं कृ ष्णमानर्चु–,
द्रू टपौरुषम् ॥ ३१ ॥

विदाह्य य दुभिः कंसं,
मथुरा ना यकोऽभवत्।
कृष्णेन श मर्देनासा–,
वुग्रसे नः प्रणोदितः॥ ३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
कृष्णाङ्क एकत्रिंशः सर्गः
सम्पूर्णः ॥ ३१ ॥

## अथ कृष्णाङ्को द्वात्रिंशः सर्गः

स्वसुता अ थ सङ्गम्य,
पादरे णु स्पृ शावुभौ।
किं शौरि र्वृ हदौत्कण्ठ्यं
न जहौ हृ र्षितान्तरः ॥ १ ॥

सोऽवोच त्कृ तकृत्योऽयं,
यदुवं शः कृतस्त्वया।
के द्विषोऽ स्थू रणार्थं वै,
तवाग्रे लो कपालक ॥ २ ॥

त्रिलोक गु रुणादिष्टो,
गौरवे ण व्रजेश्वरः।
शकटा भृ तसम्भारः,
प्रत्यागा न्नि जगोकुलम् ॥ ३ ॥

कंसारि र्गु रुणा ब्राह्म,
संस्कारे णो पयोजितः।
सच्चक्रे म थुरापुर्यां
कृतस्ने हान् स्थितान् यदून्॥४॥

भ्रातरा अ ध्यगीषातां,
विद्या वि धृ तसद्व्रतौ।
अवन्ति तः कृतावासाद्,
विप्रात्तौ स्व क्रियाकृतः ॥ ५ ॥

गुरुर्वि धृ तविद्याभ्यां
ताभ्यां चे तः समीहितम्।
प्रभीतं स्वा त्मजं लब्ध्वा,
प्रसन्ना स्यः प्रहर्षितः ॥ ६ ॥

| | | | | | |
|---|---|---|---|---|---|
| पुनस्तौ | प्रा | प्रवेदार्थौ, | हत्वासा | आ | गतं कञ्चिद्, |
| भूमिशु | रवं | शवर्धनौ । | यवनं | श्र | मकर्शितम् । |
| पुरीं स्वां | शो | भिताम्प्राप्य, | नीत्वा श्र | मः | पुराद्दूरं, |
| स्वप्रभा | वं | वितेनतुः ॥ ७ ॥ | कृष्णः स्वा | श्र | यमागमत् ॥१३॥ |
| श्रुत्वा वि | श | ज्जरासन्धं, | कृष्णोऽथ | म | थुरां त्यक्त्वा, |
| सुताध | व | विनाशनम् । | कृतत्रा | णः | सबान्धवः । |
| शोकः सा | र्द्र | ममर्षेण, | द्वार्वतीं | क्षा | रवार्ध्यन्तः, |
| साभिमा | नः | कुतः सुखी ॥ ८ ॥ | सहरा | मः | समासदत् ॥१४॥ |
| सैन्यैर्भू | भा | रभूतैः स्वै-, | श्रीकृष्णं | सु | षमास्थानं, |
| र्यदुवी | र | पुरीमसौ । | चकमे | प | तिमात्मनः । |
| रुध्वा वि | भू | त गोविन्दं, | प्रेमपू | र्णो | त्तमस्वान्ता, |
| जेतुमु | त्क | मना मुदम् ॥९॥ | रुक्मिणी | वा | रिजेक्षणा ॥१५॥ |
| तेनोन्म | थि | तसीमान्तां, | तयाश्रु | यु | तयाहूतः, |
| वीक्ष्याभी | तो | हरिः पुरीम् । | प्रच्छन्नं | वा | ञ्छितप्रदः । |
| रथेना | यो | ऽभ्रभृद्युक्तो, | रुक्मिणीं | ह | र्तुकामोऽगाद्, |
| निर्ययौ | गी | र्जितामृतः ॥१०॥ | विष्वक्से | नः | स कुण्डिनम् ॥१६॥ |
| सर्वमा | यो | धने सैन्यं | चैद्योऽपि | ध | न्विभिर्गुप्तो, |
| देवता | गी | तसत्कथः । | रुक्मिणोऽ | नु | मतेन वै । |
| यादवे | शः | पराजिग्ये, | ः सा | र्ध | मगाल्लब्धुं, |
| सजरा | स | न्धमोजसा ॥११॥ | वधूं वी | रो | ऽथ कुण्डिनम् ॥१७॥ |
| निजे स | र्व | बले नष्टे, | स्वभूमी | ध | वजोद्वाहे, |
| लज्जितः | का | न्तिवर्जितः । | पौरास्ते | नु | र्महोत्सवम् । |
| देशं स्वं | म | गधेन्द्रोऽगात्, | तस्मिन्प | र्वे | च वेदज्ञा-, |
| सविषा | दः | पराजितः ॥१२॥ | श्चक्रुर्वे | दो | दितां क्रियाम् ॥१८॥ |

विधाय **द** र्शनं देव्या,
दैवद **ण्डो** पशान्तिदम् ।
प्रयान्तीं **द** र्शनीयाङ्गीं,
रुक्मिणी **म** हरद्धरिः ॥ १९ ॥
लेभे द् **यि** तमात्मेशं,
रामं सी **ता** यथा पुरा ।
भैष्मी य **द** स्य भक्तानां,
ध्रुवं का **मः** फलेग्रहिः ॥२०॥
समीक्ष्या **प** हृतां भैष्मीं,
**रा** रुषाब्रुवन् ।
श्रीरूप **जि** त्वरीं कन्यां,
गोपजा **तः** कथं हरेत्॥२१॥
ते जरा **स** न्धसन्दिष्टा,
वीरा ग **र्व** समन्विताः ।
रुरुधुः **स** र्वतः कृष्णं,
जेतुं सिं **हो** पमौजसम् ॥२२॥
निनाय **नि** शितैर्बाणै–,
र्द्विषत्का **य** विभेदिभिः ।
तान्कृता **न्ता** लयं कृष्णो,
जगद्धा **नि** कृतोऽखिलान्॥२३॥
ससैन्यं **य** दुवीराभ्यो
रुक्मिणं **मो** हितं शरैः ।
संविधा **य** स्वभक्तानां,
कृतका **मः** समग्रहीत् ॥२४॥

रुक्मिणं **स** दयो रामो,
नष्टस **त्व** ममूमुचत् ।
विलज्जा **वान्** रुषा रुक्मी,
तत्रैवा **सा** वथावसत्॥२५॥
चैद्यं वि **त्वि** षमाश्वास्य,
राजलो **कः** प्रयातवान् ।
रुक्मिण्या **स** ह कृष्णोऽगात्,
कृतकृ **त्यः** स्वकां पुरीम् ॥२६॥
निर्णीते **स** मयेऽगृह्णाद्,
भैष्म्याः स **त्य** व्रतो हरिः ।
करं स्व **ध** र्मतत्त्वज्ञै–,
र्द्विजैः क **र्म** विशारदैः ॥२७॥
श्रीकृष्णे **प** रिणीते यं,
तेनुः पौ **रा** महोत्सवम् ।
तच्छोभां **य** तमानोऽपि,
वक्तुं ह्री **णः** कविर्भवेत् ॥२८॥
कृष्णोऽसा **अ** द्भुतैश्वर्यो,
यशःशो **भि** तदिङ्मुखः ।
ररक्ष **प्रा** प्तसर्वार्थः
प्रजाः श्रे **यः** प्रदो निजाः ॥२९॥
शासके **प्रि** यदे तस्मिन्,
श्रीकृष्णे **या** दवर्षभे ।
न दुःखा **र्हो** ऽप्यभूद् दुःखी,
यः सुखा **र्हः** स किं पुनः ॥३०॥

द्वार्वत्यां प्रि यक्तत्स्वानां,
सर्वदा य दुनन्दनः ।
स रक्षा कृत् सतां रेजे,
यदूनां प्री तिदायकः ॥३१॥

रेजे प्री ति प्रदः स्वेषां,
श्रीकृष्णो व नितायुतः ।
इन्द्रः सा र्धं मिवेन्द्राण्या,
स्वभक्तै नः प्रणाशकः ॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रिप्रणीते-
कृष्णाङ्को द्वात्रिंशः सर्गः
सम्पूर्णः ॥ ३२ ॥

## अथ कृष्णाङ्कस्त्रयस्त्रिंशः सर्गः

स्वशत्रुं वि दितं
सूतीगे हा ज्जनुर्दिने ।
हत्वा तो य निधौ प्रास्थ–,
च्छम्बरः स वैदैत्यराट् ॥१॥

तं मत्स्य ग र्भगं बालं,
तत्स्त्री र ति रपालयत् ।
स वित ज्यों क्तिभिः शत्रुं,
दुष्टारा तिः किलावधीत् ॥२॥

प्राप्तं स्व सु तमालिङ्ग्य,
कृष्णस्तं रु क्मिणीयुतः ।
चि रतो नष्टं,
सबन्धु र्हु तभुक्प्रभम् ॥३

यदा धृ त
सुधर्मा भु वमागमत् ।
तद्विष्व ग्वि स्तृतद्युत्या,
ककुभोऽ भुः प्रकाशिताः॥ ४

नृपार्थं र विणा दत्तं,
ययाचे वि मलं मणिम्
श्रीहरि र्वि गतायुस्तं,
नादाद्री रो ऽप्यसौ मणिम्॥५

विदित्वा च निजं नाथं,
कृतमा नः सुतां निजाम् ।
देवकी सू नवे प्रादा–,
दृक्षव र्यः कृताहवः ॥ ६

स्वसुतां स त्यभामाख्यां,
कृष्णाय वि दितात्मने ।
ददौ पि ता च सत्राजित्,
स्वाघभा र निवृत्तये ॥ ७

हतो मे वि पिने भ्राता,
हरिणा लो भतो मणेः ।
मृषा वो च ज्जनेभ्योऽसौ,
तत्ते नै नः कृतं हरेः ॥ ८ ।

कृष्णोऽसा **अ** चलेऽद्राक्षीत्,
तं प्रसे **न** मथो मृतम् ।
बिलं प्रा **न्तो** लपं चैषो–,
ऽविशद्व **हु** तमोऽन्वितम् ॥९॥

तं मणिं **त** त्र सम्प्राप्य,
तस्मै प्र **भु** रदात् पुनः ।
शुद्धवा **ग्भो** जनस्वान्ता,
दोषयु **क्ता** न कर्हिचित् ॥१०॥

सुप्तं स्व **सु** ह्रदेवासुं,
मण्यर्थं **ख** लधीर्न्यहन् ।
विमुक्ति **दो** ऽवधीत्पापं,
कृष्णस्तं **नै** कपापहृत् ॥११॥

व्यवोढ **क** न्यकां भानो–,
र्देवकी **जो** विधानतः ।
स्वकर **ग्र** हमिच्छन्तीं
सुररा **जः** शचीमिव ॥१२॥

आवन्त्या **अ** थ जित्वा तद्–,
भगिनीं **नि** जकाङ्क्षिणीम् ।
जह्रे ग **र्वि** तभूपानां,
द्विण्निष **ण्णः** प्रभू रथे ॥१३॥

श्रीकृष्णः **स** प्तसङ्ख्यान् वै,
दमित्वा **दा** न्तगोवृषान् ।
तनया **म** वधेशस्य,
व्यवोढ **र्षी** ड्यसत्कथः ॥१४॥

हरये **लो** कनाथाय,
स्वयमा **का** र्यं दत्तवान् ।
केकया **धि** पतिः स्वीयां,
कन्यां प्रे **ष्ठा** मनुत्तमाम् ॥१५॥

रूपेणा **न** वमां लक्ष्म्या,
लेभेऽसौ द्रराट्सुताम्
विध्वास्य **क्षु** तमत्स्याङ्कं,
हरिर्या **तः** स्वयंवरे ॥१६॥

हरिणा **स** त्यभामायाः,
प्रियार्थं **ना** कलोकतः ।
सुरान्म **त्स** रिणो जित्वा,
नीतोऽने **ना** मरद्रुमः ॥१७॥

कृष्णो भू **त** नयं हत्वा,
रुद्धास्ते **न** स्त्रियोऽयुतम् ।
षष्ट्याह **त** शतोपेतं,
द्वारका **मः** समग्रहीत् ॥१८॥

रुक्मिणः **क** न्यकां कार्ष्णी–,
रतेर **पि** विमोहिनीम् ।
पुण्यशी **लः** शुभाचारां,
जहारै **क** रथो बलात् ॥१९॥

कार्ष्णेर **पि** सुतो जज्ञे–,
ऽनिरुद्धो **र** थिनां वरः ।
भक्तसे **व्य**
यस्तुरी **यः** प्रकीर्तितः ॥२०॥

रुक्म्यस्मै **स्व** सूपौत्राय,
कुलस्व **स्ति** कृते कृती ।
सप्रमो **दः** स्वकां पौत्रीं,
प्रददौ **स्व** सुहार्दतः ॥२१॥

न्यहन् स्व **स्ति** करो रामो,
रुक्मिणं **कृ** तकिल्बिषम् ।
बलव **त्स्व** घकृल्लोके,
को वा स्व **स्ति** युतो भवेत्॥२२॥

आययौ **स्व** पुरीं कृष्णो,
हयह **स्ति** प्रणादिताम् ।
सयज्ञ **भुक्** प्रभुर्वध्वा,
पौत्रेण **स्व** स्य चान्वितः॥२३

प्राद्युम्नि **स्ति** ष्ठतिस्मासा–,
वुषाया **द** यितोऽन्तिके ।
गुप्तो र **क्षि** त एवास्या,
दैत्यो बा **णः** पिताभवत् ॥२४॥

बद्धोऽसा **अ** थ बाणेन,
दृष्ट्वाघं **रौ** द्रमस्य तत् ।
पुर्या रु **द्रः** सदा यस्य
रक्षकः **कु** लदैवतः ॥२५॥

तं प्रच **ण्ड** बलं बाणं,
बनमा **ली** तदाजयत् ।
शङ्करं **च** निजास्त्रेण,
भृशं च **क्री** व्यमोहयत्॥२६॥

तं बाणं **वि** जितं कृत्वा,
ङ्खं च **क्र** धरोऽधमत् ।
जगत्स्वा **म्यू** र्जितौजाः स,
निजदो **र्जि** तदानवः ॥२७॥

स्वपुत्र **त** नयं वध्वा,
सहितं **शा** न्तिकृत्सताम् ।
आययौ **स** मुपादाय,
दत्तदा **नः** पुरीं प्रभुः॥२८॥

मोचितः **श** युवत्कूपे,
बहून **ब्दा** नवस्थितः ।
कीटजा **ति** गतोऽनेन,
नृगश्चा **गः** प्रणाशिना॥२९॥

जघान **श** मदो वासु–,
देवश **ब्द** धरं मृषा ।
पौण्ड्रकं **स** सखं कृष्णः,
सद्विद्रो **हः** स्वनाशकृत् ॥३०

स्वारिं का **शि** पतेः पुत्रो,
निहन्तुं **शि** वमार्चिचत् ।
तस्मै ह **रः** सुतुष्टोऽदात्,
कृत्याग्निं **श** त्रुनाशिनीम्॥३१॥

दग्धः स **र्व** स्वसंयुक्तः,
कृष्णवै **री** स चारिणा ।
प्रयुक्तोऽ **क** ल्मषे पुं
स्वाभिचा **रः** स्वनाशनः॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामि-लक्ष्मणशास्त्रि-प्रणीते
कृष्णाङ्कस्त्रयस्त्रिंशः सर्गः
सम्पूर्णः ॥ ३३ ॥

## अथ कृष्णाङ्कश्चतुस्त्रिंशः सर्गः

रामोऽथो **अ** वधीद्द्रौ,
द्विविदं **क्रू** रचेष्टितम् ।
यमोऽप **रः** सुदुष्टानां,
स्वधर्मा **पे** तमेकदा ॥ १ ॥

कौरवे **श** सुतां जह्रे,
साम्बो बा **लो** ऽपि पश्यताम् ।
नृपाणां **द** यिताकामो,
रणद **क्षो** ऽथ लक्ष्मणाम् ॥ २ ॥

बद्धोऽसौ **द** र्पपूर्णैस्तै–,
र्वाग्भिरा **क्षि** प्य कौरवैः ।
सङ्कर्ष **णः** समानिन्ये,
विमोच्य **क्ष** मिराट् च तम् ॥ ३

गतो नै **मि** षतीर्थं तु,
वीक्ष्यर्षी **णां** कथागुरुम् ।
अहम्भा **व** भृतं सूतं,
यदुवी **रः** क्रुधा न्यहन् ॥ ४ ॥

मुनयो **वि** नयेनोचू–,
रामं वि **द्व** ज्जनप्रियम् ।
प्रायश्चि **त्त** मघस्यास्य,
श्रेयस्का **मो** भवान् क्रियात् ॥ ५ ॥

बल्वलं **वी** र्यवान् दुष्टं,
हत्वा हि **त** करः सताम् ।
सिषेवे **भ** व्यतीर्थानि,
**थः** समा बह्वीः ॥ ६ ॥

पृथाद्वि **पु** त्रयुक् प्राप,
द्विज पु **ण्य** स्वरूपधृत् ।
विश्रुत **श्र** वसं दाने,
मागधं॰ **व** रदं हरिः ॥ ७ ॥

प्राप्तान् प्री **ण** यतः पुंसः,
सफलः **की** र्त्तितो भवः ।
इति स्मा **र्त्तं** वचः स्मृत्वा,
नाभूद्दी **नः** स मागधः ॥ ८ ॥

अप्यसा **उ** पधिं जानन्,
तेभ्योऽद **त्ता** र्थमीप्सितम् ।
वृकोद **र** कृतद्वन्द्वः,
स सप्रा **णो** न्ययुध्यत ॥ ९ ॥

न्यहन्सु **दु** र्जयं भीम–,
स्तमावि **ष्कृ** तसद्बलम् ।
को वाप्नो **ति** जयं यस्य,
विधेरी **हा** पराङ्मुखी ॥ १० ॥

तद्राज्ये **पु** त्रमस्यैव,
सच्छर **ण्यो** ऽभिषिक्तवान् ।
मोचिता **दुः** खतो भूपाः
कृष्णेन **स्व** पदाश्रिताः ॥११॥

श्रुत्वा स्व **प्न** मतिस्तेभ्यः,
शत्रोस्तां **ना** शसत्कथाम् ।
प्रारेभे **श** मेदं यज्ञं,
नृपोऽनू **नः** शतक्रतोः ॥१२॥

राजानो **वी** र्यसंयुक्ताः,
समागू **र** णरागिणः ।
कृतस्ने **हा** जनाश्चान्ये,
सोपहा **र** कराः क्रतौ ॥१३॥

तन्महे **क्ष** णकामास्तु,
सुपर्वा **णः** समागमन् ।
जगदी **शा** श्रयं राज्ञो,
हेतुं स **न्तो** ऽवदन्नमुम् ॥१४॥

पूर्वं ते **जी** यसः पूजां,
कृष्णस्यै **व** नृपोऽकरोत् ।
सर्वोऽप्यू **नः** सुनिर्णीत–,
स्तदन्यः **प** रमर्षिभिः ॥१५॥

चैद्योऽना **र्य** स्तदा कृष्णं,
निनिन्दा **व** द्यजीवनः ।
असूया **स्थि** रधीः को वा,
सुखं या **तः** परश्रिया ॥१६॥

चैद्योऽसा **अ** गमन्मोक्षं,
श्रीकृष्णे **न** हतोऽरिणा ।
यतोऽन **न्त** स्य निन्दापि,
विष्णुसा **रू** प्यदा न किम् ॥१७॥

गतता **पो** नृपो यज्ञं,
समाप्या **न** न्दितोऽभवत् ।
लेभेऽत्य **न्त** मुदं लोक–,
स्तन्मख **श्री** विलोकनात् ॥१८

समीक्ष्यो **र्जि** तमैश्वर्यं,
गान्धारी **त** नयोऽस्य तत् ।
प्रययौ **म** त्सरग्रस्तो,
जातम **न्यु** र्गजाह्वयम् ॥१९॥

गतभी **र्भ** यदं स्वेभ्यः,
शाल्वं मा **या** विनं हरिः ।
हत्वास्मै **प** रमं प्रादाद्,
वीतमो **हः** स्वकं पदम् ॥२०॥

तेनान्ये **च** हता दुष्टाः,
कृष्णेना **तु** लतेजसा ।
सविदू **र** थकारूषाः,
सज्जनो **त्रो** त्कटद्विषः ॥२१॥

सखा भ **ग** वतः कश्चित्,
तपः शो **भी** द्विजोऽभवत् ।
पुत्रदा **रा** न्वितो नित्यं,
विजिता **त्मा** तिनिर्धनः ॥२२॥

तद्भार्या वि प्रवर्यं तं,
सन्तुष्टं दि ष्टलब्धतः ।
द्वार्वती शो पकण्ठं वै,
प्रयातुं व्या दिशत्सती ॥२३॥
तस्मै वि दि तहार्दोऽसौ,
प्राप्ताया शो ज्झितात्मने ।
प्रददौ दि व्यभोगाढ्यां,
जगदी शः परां श्रियम्॥२४॥
अहोऽथो अ भवद्रौद्रो,
लोकानां ना शकृद्रवेः ।
सकुर्वा दि पदं क्षेत्रं,
तदागु भू रिशो जनाः॥२५॥
ते चतु र्भु जमालोक्य,
प्रापुरे वो त्तमां मुदम् ।
क्षणं च ल स्वभावापि,
यं न ल क्ष्मीः खलूज्झति॥२६॥
तत्र ते सु कृतं कृत्वा,
विहितं वी क्ष्य चाद्भुतम् ।
महाध्व रो त्सवं शौरेः,
प्रययू रु च्यनुक्रमात्॥२७॥
स्वाम्बाया चि ष्ट संनष्टान्,
द्रष्टुं धी रा यदा सुतान् ।
आनीया ङ्क भवांस्तस्याः,
सम्भ्रमो दः प्रभुर्ददौ ॥२८॥

स्वानां वि ज यकृत् कृष्णः,
पृथात न यसारथिः ।
भूत्वा स्वै नो हतं पार्थैः,
कुरुरा ज मजीघतत् ॥२९॥
गीताज्ञा न मुवाचासा-,
नं ज गदीश्वरः ।
मृत्युज न्मा दिरोगाणां,
यदुक्तं दि व्यमौषधम् ॥३०
श्री हरि र्भी हरः स्वानां,
गन्तुका मो निजं पदम् ।
मुनीनां भी ममन्यूनां,
शापात्स म हरत् कुलम् ॥३१॥
चरित्रं प रमं पुण्यं,
कृष्णस्या रा धकः पठन् ।
नरोऽति क्र म्य संसारं,
यात्यका मः परं पदम् ॥३२॥

इति श्रीविष्णुचरितामृते-चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते -
कृष्णाङ्कश्चतुस्त्रिंशः सर्गः
सम्पूर्णः ॥ ३४ ॥

अथ व्यासाङ्कः पञ्चत्रिंशः सर्गः ।

नाम्नाथो **आ** त्मजो जज्ञे,
वशिष्ठो **धा** तुरीप्सितः ।
तत्सूनु **र** भवच्छक्ति–,
र्नितरां **नि** यतेन्द्रियः ॥ १ ॥

जज्ञेऽम **ल** मतिः शक्ते–,
स्तनयो **यो** गवित्तमः ।
धर्मप्र **धा** नशास्त्राणां,
सम्प्रणे **ता** पराशरः ॥ २ ॥

पुराण **पु** रुषस्यासौ,
कीर्त्तिं पु **ष्प** स्रजं यथा ।
जग्रन्थे **हा** नुरक्तः स्याद्,
हरेर्दा **सः** षडङ्घ्रिवत् ॥ ३ ॥

प्रजज्ञे **प्र** यतात्मास्य,
पूज्यपू **जा** परायणः ।
व्यासो नि **ग** मतत्त्वज्ञः,
कविवी **रः** कुशाग्रधीः ॥ ४ ॥

पुत्रोऽथो **ऊ** र्द्ध्वरेता वै,
शुद्धधी **र्ध्व** स्तकल्मषः ।
वक्ता भा **ग** वतस्यास्य,
नामत **स्स** मभूच्छुकः ॥ ५ ॥

कलावु **त्प** त्स्यमानानां,
पशुयू **था** नुकारिणाम् ।
व्यासः स्वा **चा** रहीनानां,
चक्रे धी **रः** सदा हितम् ॥६॥

स शम्या **प्रा** सतीर्थस्थो,
व्यासः प्र **ण** वजापकः ।
अदृष्ट्वा **दुः** स्वचित्ताधेः,
कारणं **प्र** त्यभाषत ॥ ७ ॥

प्रा **ण** भृतां
शुद्धभा **वः** सदा यते ।
तथापि **प** रितोषाढ्यो,
मच्चित्ते **णः** कुतोऽस्ति न ॥८॥

यदा वि **प्र** वरस्यैवं,
सन्तापो **मा** नसेऽभवत् ।
शुचा क्षी **णं** तदा
नारदः **प्रा** प्तवानमुम् ॥ ९ ॥

तं ब्राह्म **ण** वरं प्राप्तं,
नारदं **नि** यतेन्द्रियम् ।
बभाषे **ल** ब्धसन्तोषो,
वासवे **यः** सुसत्कृतम् ॥१०

महर्षे **प्रा** प्तवान्मे त्वं,
निष्कार **ण** हितेच्छया ।
किमम्भो **भृत्** पयो दातुं,
स्वाम्भृतिं **प्रा** र्थयत्यसौ ॥११॥

किं कार **ण** मयं ब्रह्मन्,
न शर्म **जी** व एति मे ।
स्वधर्मे **व** र्त्तमानस्या–,
प्यसौ दी **नः** कुतोऽस्ति च॥१२॥

स्वयम्भू त नयो व्यासं,
शाश्वत त्त्वं प्रदर्शयन् ।
बभाषे त त्त्वविन्मुख्यः,
शुद्धस त्त्व जनप्रियम् ॥१३

वाणी सा वि फला प्रोक्ता,
ह्यपि धी दे वतोदिता ।
यस्यामे का न्ततो ब्रह्मन्,
परमा त्मा न वर्ण्यते ॥१४॥

यं ज गदीशस्य,
नाम्नोऽन्य न्म न्महे मृषा ।
कोऽनुगो मृ गतृष्णाया,
जनो नै त्यु पहास्यताम् ॥१५॥

वासवी ज निजस्वान्ते,
हरिमा रा धयानिशम् ।
प्रनङ्क्ष्य ति यतोऽवश्यं,
चित्तोद्वे गः क्षणात्तव ॥१६॥

एवं स्व भू भुवादिष्टो,
व्यासः स्व र्भु वनर्षिणा ।
ससङ्गा वः सदा विष्णुं,
सस्मार स्व स्य मानसे ॥१७॥

स्त रतो व्यासः,
स्वकृतै रू त्तमैर्हरेः ।
कीर्तिं व्य स्ता रयत्तद्वै,
शास्त्रसा रः स्मृतो बुधैः ॥१८॥

निर्ममे स र्वलोकानां,
कृते ऽघ पि हितात्मनाम् ।
सर्वज्ञा ता पुराणानि,
वस्विन्दु प्र मितानि सः ॥१९॥

अज्ञान पि हिताक्षाणां,
जनानां ता रणाय सः ।
भारतं म हदाख्यानं,
सुभव्यो हृः प्रणीतवान् ॥२०॥

व्यासोऽसौ य ज्ञसन्तत्यै,
त्रिकाल ज्ञो विभक्तवान् ।
चतुर्धा य मिराडेकं,
वेदम ज्ञ जनास्फुटम् ॥२१॥

शास्त्ररू प प्रदीपोऽयं,
ज्ञानोन्न ति कृते नृणाम् ।
रुचा सू र्य रुचेश्चौर-,
स्तेन प्र ज्वा लितोऽवनौ ॥२२॥

अर्जुना य रणस्थाने,
स्वं तत्त्व ज्ञा नमुक्तवान् ।
यद्वेदा ङ्गो पनिषदां,
सारं श्री य दुनन्दनः ॥२३॥

तत्सर्व ज्ञ तया ज्ञानं,
वेदभा वा र्थगर्भितम् ।
सङ्क्षिप्या ह स्वगीतायां,
स कानी नः कवीश्वरः ॥२४॥

कथये य मथास्याह,
यां मनो ज्ञ जनुः कथाम् ।
यूयं नि भृ तच्चित्तास्तां,
शृणुता द्य प्रहर्षिणीम् ॥२५
वीर्यं य ज्ञ भुजां मार्गे,
गच्छतः कृ तिनोऽस्खलत् ।
उपर्या द्य चराख्यस्य,
राज्ञो रा ज्ञी च्छविस्मृतेः॥२६
मत्स्यस्तो य चरः
वीर्यम ज्ञ स्तदाग्रसत् ।
तत्कुक्षि भु वमादत्त,
दाशो भा ग्य वतीं सुताम्॥२७॥
सुमनो ज्ञ तनुर्लेभे,
स्वगर्भं सा पराशरात् ।
तस्माद्वो ध निधिर्जज्ञे,
व्यासोऽनू नः पितुर्गुणैः ॥२८॥
दारेषु य मिराड्भ्रातुः,
स धर्म ज्ञा नजीजनत् ।
त्रीनन न्त तपाः पुत्रान्,
कुलैधा कृ तये कुरोः ॥२९॥
यामाख्या द्य विदुर्विज्ञाः,
सुधाम ज्ञ जनैः स्तुताम् ।
वाणी सु गु प्रभावार्था,
भुव्येषा ह्य स्य राजते ॥३०॥
विष्णोर्ना म सहस्रं स,
किं व्याख्य न्न हि भारते ।
सर्वका म प्रदं पुंसां,
कलिच्छि न्ना युषां कृते ॥३१॥
द्वात्रिंश द मलश्लोकै–,
र्मयासा ए नसां हरः ।
वर्णितो व रदो भूयाद्,
व्यासस्य च रितक्रमः ॥३२॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
व्यासाङ्कः पञ्चत्रिंशः सर्गः
सम्पूर्णः ॥ ३५ ॥

## अथ बुद्धाङ्कः षट्त्रिंशः सर्गः ।

यदासौ आ गतो घोरः,
कलुषा त्म प्रियः कलिः ।
तदा मा यो रुहिंसाद्यै–,
र्धर्महा निः क्षितावभूत्॥ १ ॥
अकार्षुः स्व र्गभोगार्थं,
हिंसाप्रा य मखक्रियाः ।
कलौ स ञ्जा तनानेहा,
जना भू तो पतापिनः ॥ २ ॥

प्रजज्ञे वै धर्मीं सृष्टिं,
भव दुः खा तिसङ्कटात् ।
जनार्द नः समुद्धर्तुं,
बुद्धाख्यः सा धुरूपधृत् ॥ ३ ॥
उद्भूय म गधेष्वेष,
तपो रा गा दिवर्जितः ।
जितेन्द्रि य चयश्चक्रे,
धृतमौ नः समा बहूः ॥४॥
स्वीचक्रे दे हि मात्रेऽसौ,
दयाभा व समन्वितम् ।
धर्मं प्र की र्तितं पूर्वं–,
निजं ज न हिते रतः ॥ ५ ॥
स्वैः स्वान न्द युतो हिंसां,
वाक्यैरे नः प्रणाशकैः ।
नरान स्त्र पवृत्तीन् स,
त्यक्तुं दु ष्टा नुपादिशत् ॥ ६ ॥
बभूव क्षि तिपृष्ठेऽसौ,
धर्मश्चा ती वविश्रुतः ।
वक्तुमी शः कथं मादृक्
तद्धर्मा पा रविस्तरम् ॥७॥
जनता प प्रणाशी स,
पञ्चसू ना
सर्वेषां शा मिनां मुख्यः,
श्रीबुद्धो नः क्रियाच्छिवम्॥८॥

इति श्रीविष्णुचरितामृते–चित्रकाव्ये
राजस्थानान्तर्गत-नागौर-नगरस्थ-
स्वामिलक्ष्मणशास्त्रिप्रणीते
बुद्धाङ्कः षट्त्रिंशः सर्गः
सम्पूर्णः ॥ ३६ ॥

## अथ कल्क्यङ्कः सप्तत्रिंशः सर्गः

यदा ह्य शा रणे लोके,
जयश ङ्ख मवादयत् ।
कलिर्नि भृ त
बलोच्छि न्न द्विषद्बलः ॥ १ ॥
लोका म न्द धियोऽभूवन्,
कुटुम्बे की शवद्रताः ।
विधर्मा च रणभ्रान्ता,
लोभाद्वि क्री तसत्क्रियाः॥२॥
कलेर्वै शा सकः कल्की,
नाम्ना शा र्ङ्ग धनुर्धरः ।
प्रजज्ञे ध र्मरक्षायै,
विप्रधे न्वा र्तिनाशनः ॥ ३ ॥
वायुवे ग जितं सोऽश्व–,
मारुह्यो दा युधः प्रभुः ।
चचारा ध र्मविस्तारं,
सत्स्वक्र रः प्रणाशयन् ॥ ४ ॥

ददृशू **र** म्यरूपं ये,
लोकना **था** र्चितं हरिम् ।
कलिस **ङ्ग** भवास्तेषां,
सर्वे ता **पा** लयं ययुः ॥ ५ ॥
अभूत्प्रा **णि** मनोवृत्तिः,
स्वच्छनी **र** वदुज्ज्वला ।
धर्मर **क्षो** द्यते तस्मि–,
ल्लभ्योऽस **भ्यः** कुतः क्षितौ ॥ ६ ॥
सद्वृत्तिः **स** र्वलोकानां,
यथा पू **र्व** मवर्तत ।
हरिणा **प्र** लयं नीतो,
धर्मद्रो **ह** करः कलिः ॥ ७ ॥
कल्किनो **र** म्यभावेन,
चरित्रे **णा** मुना नृणाम् ।
श्रुतेना **यु** र्धनप्राप्ति–,
स्तथा बो **धः** स्वतो भवेत् ॥ ८ ॥

इति श्रीविष्णुचरितामृते चित्रकाव्ये राजस्थानान्तर्गत-नागौर-नगरस्थ-स्वामिलक्ष्मणशास्त्रिप्रणीते कल्क्यङ्कः सप्तत्रिंशः सर्गः सम्पूर्णः ॥३७॥

**समाप्तोऽयं ग्रन्थः ।**

## ग्रन्थान्ते समाप्तिप्रदर्शकं पद्यत्रयम् ।

नागौरनामनगरे प्रथिता प्रधाना-
नाथोपकारकरसंस्कृतपाठशाला ।
यत्स्वामिपाठितसहस्रमहीसुराणां,
नूनं न विस्मृतिपथं समुपैष्यतीयम् ॥ १ ॥
तत्पाठकः सुमतिलक्ष्मणशास्त्रिनामा,
श्रीविष्णुचित्रचरितामृतमग्र्यपद्यैः ।
शाके शराङ्गवसुसोममितेऽतिसौम्ये,
सम्पूर्णतामगमयत्पठतां हिताय ॥ २ ॥
एतन्निबन्धगतपादतुरीयवर्णै–,
र्द्वैपायनर्षिकलिता किल विष्णुनाम्नाम् ।
उत्पद्यते दशशतीति सुकाव्ययुक्ति–,
र्विज्ञैर्विमत्सरमनोभिरवेक्षणीया ॥ ३ ॥ इति

# अथ श्रीविष्णुस्तवद्वादशी ।

( चित्रकाव्यम् मूलमात्रम् )

चराचरात्मा धृतसाधुवेषः, सदा हरी रक्षति विश्व **मेषः** ।
क्रियान्मनो मे भवभोग **लग्नं**, स्वकीर्तिपीयूषसमुद्रमग्नम् ॥ १ ॥

सुतो नाभेर्योऽभूज्जगति विदितो नाम ऋषभः,
समुद्धर्तुं लोकान् कुमतिकलितान् योगि**वृषभः** ।
स मां दीनं दुष्टेन्द्रियविलुप्तेप्सितध**नं**,
हरिः पायान्नित्यं खलु निखिलदोषैकसदनम् ॥ २ ॥

पुरा वेनस्याङ्गात् क्षुधितजनताक्लेशपिशुनं,
पृथुश्चार्चिर्नाम्ना भुवि समभवत् पुत्र **मिथुनम्** ।
विनश्येत् तत्स्मृत्या मम विषयमोहो हि **सहजः**,
पुनर्नानाजन्मार्जितविविधदुष्कर्मफलजः ॥ ३ ॥

श्लाघ्यो बभूवेति विदां वितर्कः,
श्रीरामजन्माङ्कतया हि **कर्कः** ।
यत्संश्रयात् पूज्यतमा च **माता**,
साकेतराट्स्त्री जगतोऽपि जाता ॥ ४ ॥

परोऽश्नुते कोरिव घाकृतिं हः,
स्तम्भात् तथाप्रोत् स्वजनिं नृ **सिंहः** ।
रिपून् विजिग्ये च कयाधु **पुत्रः**,
सदाधृतैतत्करुणातनुत्रः ॥ ५ ॥

विचक्षणा कास्ति ततस्तदन्या,
वव्रे पतिं यद्धरिमब्धि **कन्या** ।
तन्नामतो नश्यति सर्व**रोगः**,
कदापि न स्याच्च सुखैर्वियोगः ॥ ६ ॥

चित्रैश्चरित्रैर्विविधै र्विसंस्थुला,
कथा यदीया कथिता तथातुला ।
हरिः स्वभक्ताखिलपापघस्मरः,
पायात् सदैषोऽद्भुतसद्गुणाकरः ॥ ७ ॥

काको वृको दुष्टजनश्च कौशिकः,
सिंहोऽथ सर्पोऽजगरश्च वृश्चिकः ।
पाल्या इमेऽप्यस्य जनिस्तथा स्मृतिः,
पुंसां यतोऽतोऽस्य महाद्भुता कृतिः ॥ ८ ॥

शैवं बभञ्जैष पुरा हरेस्तनुः,
श्रीरामभद्रः स्वजनप्रियो धनुः ।
वक्तुं न चैषाम्प्रभवाम्यहं तपः,
संसाध्यते यैर्हरिनामसज्जपः ॥ ९ ॥

तदा रक्षन्चासौ निजनुतिकरं तं सुरवरः,
पुरागृह्णाद्यर्हि द्विपकुलपतिं कोऽपि मकरः ।
सदा पायाच्चासौ निखिलजगतामेकजनकः,
कदाचिन्नायं यत् त्यजति करुणां विश्वरचकः ॥ १० ॥

देव्या यया वै निहतो निशुम्भः, श्रीवायुजेनेव हतो निकुम्भः ।
नाश्यात्तथा वारिदनिर्म लाभः, पापानि सर्वाणि ममाब्जनाभः ॥११॥

वैवस्वतं यो भजतामधीनः, पातुं स्वभक्तं हि बभूव मीनः ।
तेषां भवेन्नैव कदापि हानिः, प्रीतोऽस्ति येषां च रमैकजानिः ॥१२॥

या निर्मिता लक्ष्मणशास्त्रिणा श्री-, विष्णुस्तवद्वादशिकातिरम्या ।
पद्यार्थसन्दर्शितराशिभावा, विदां सदानन्दविधायिनी स्यात् ॥ १३ ॥

इति ।

## अथ श्रीविष्णुस्तुतिः ।

### ( चित्रकाव्यम्, मूलमात्रम् )

स्ववैद्यौ या **अश्विनी** जौ प्रसिद्धौ,
शिष्यावेतौ यस्य धन्वन्तरेर्वै ।
**विष्कम्भः** किं नास्ति तन्नामजापो,
रोगागारद्वाः कपाटं पिधातुम् ॥ १ ॥
वक्षःस्थलस्था **भरणी** कृतश्री–,
र्यः सर्वलोकार्चितपादपद्मः ।
**प्रीतिः** कृतास्मिंस्तनुते नराणां
भुक्तिं च मुक्तिं सहसा च शान्तिम् ॥ २ ॥
यं वै नित्यं **कृत्तिका** सूनुतात–,
श्चित्ते स्वीये चिन्तयत्यात्मरूपम् ।
**आयुष्मान्** किं जायते नास्य भक्तः,
कीर्त्या युक्तो विद्ययाथार्थवांश्च ॥ ३ ॥
क्रीडां कुर्वन् **रोहिणी**जेन साकं,
श्रीकृष्णोऽसौ चारयामास गाः स्वाः ।
**सौभाग्यः**[1] किं विद्यते ना तदन्यः,
सायम्प्रातर्नाम तस्य स्मरेद् यः ॥ ४ ॥
उडुवरः शुभकर्मकृते वृथा,
**मृगशिराः** कथितो बहुधा बुधैः ।
हरिसुनामजपोऽस्त्यति**शोभनः**,
सकलकार्यविधेः प्रथमं यतः ॥ ५ ॥

१ सुभाग्य एव सौभाग्यः । स्वार्थेऽणप्रत्ययः ।

भृगुकुलधृतजन्मा रामनामा हि पूर्वं,
निहतनृपतिरक्तैश्चक्र **आर्द्रा** मिलां यः ।
नहि किमु **अतिगण्डः** सदृशोऽनेन वान्यो,
वितरति कुशलं वै तज्जनेभ्यः कुयोगः ॥ ६ ॥

[१]**पुनर्वसुः** प्राप्य विधातुराज्ञां,
द्रोणोऽभवन्नन्द इति प्रसिद्धः ।
स्वयं हरिर्यस्य गृहेषु रेमे,
कोऽन्योऽस्ति तस्मादधिकः **सुकर्मा** ॥ ७ ॥

**पुष्यः** प्रशस्तो हि बुधैर्निगद्यते,
सर्वेषु कार्येषु विना विवाहतः ।
हरेः स्मृतिः कोटिगुणाधिका ततः
शुभा मतेत्थं मम निश्चिता **धृतिः** ॥ ८ ॥

[२]**आश्लेषाश्चेद्** विष्णुपादाश्रितानां,
लब्धा नूनं पूर्णसौख्यं ददन्ते ।
एते प्राप्ता दुर्जनानां नरैश्चेत्,
पुंसां तर्ह्युत्पद्यते चित्त**शूलः** ॥ ९ ॥

हरेः स्मृतिर्हन्ति नृणा**मघा**नि,
पर्णानि शुष्काणि यथा दवाग्निः ।
वृन्दावने चारयति स्म गा यो,
मुखेन्दुविद्योतितवेणु **गण्डः** ॥ १० ॥

महारि**पूफा ल्गुन** मित्रनामतः,
क्रोधश्च कामः पुरुषस्य नश्यतः ।
तथा हरेरस्य सुनामजापतो–,
**वृद्धिः** सदा स्याद्धनधर्मसम्पदाम् ॥ ११ ॥

---

१ पुनर्वसुरित्यत्र नक्षत्रादन्यत्र पुनः, वसुः, इति च्छेदः । २ आश्लेषा; सज्ञा इति नक्षत्रादन्यार्थेऽर्थो ज्ञेयः ।

**उष्मा** यथा सूक्ष्मतमा हि सञ्ज्ञा,
शास्त्रेषु भस्यार्यमदैवतस्य ।
उक्ता तथा विस्तृत एष सर्गो,
**ध्रुवः** सदैकोऽस्ति तदात्मकत्वात् ॥ १२ ॥

यः श्रीविष्णुं चिन्तयेत्सर्वकालं,
निर्द्रव्यो वा शोकरोगैर्वि **हस्तः**[1] ।
**व्याघातः**[2] स्यान्नास्य कार्येषु कोऽपि,
सिद्धान्तोऽयं सर्वशास्त्रप्रणीतः ॥ १३ ॥

स्वभक्तरक्षाकरणैकहेतवे,
लीला विचित्रा विविधाश्च कुर्वतः ।
सुखप्रदाता कथितोऽस्य संस्तवः,
पुनः सतामस्ति मनः प्र **हर्षणः** ॥ १४ ॥

**स्वातिः** प्रपात्यात्मजलानि वृष्ट्या,
शुक्त्यां हि मुक्ता विविधाः प्रसूते ।
एवं समर्प्याम्बुलवान् पुरास्मै,
लेभे हरिः स्वर्गपदं स **वज्रः** ॥ १५ ॥

महीरुहाणां ललितापि पङ्क्ति–,
र्यथा न शोभां तनुते **विशाखाः** ।
एवं हरेर्भक्तिमपास्य पुंसां,
कथं शुभा स्याद् भवभोग**सिद्धिः** ॥ १६ ॥

---

१ विहस्तो व्याकुलः । २ व्याघातो विघ्नः ।

**अनुराधा**भिधा तारा, निर्दोषास्ति शुभे यथा ।
तेषां [1]भा **व्यतिपातः** को, ये तथा हरिदैवताः ॥ १७ ॥

प्रासूत साकेतपतेर्वरिष्ठा,
**ज्येष्ठा** सुतं यं महिषी महान्तम् ।
तं सर्वदा संस्मरतो नराद् वै,
कोऽन्योऽस्ति धन्यो भुवि वा **वरीयान्** ॥ १८ ॥

संसाररूपवृक्षस्य,
**मूलं** मन्यामहे हरिम् ।
तत्स्तवोऽतो भवद्वारं
पिधातुं **परिघः** स्मृतः ॥ १९ ॥

**पूषा** बुधैर्दक्षिणनेत्रमुक्तं,
निशापतिर्यस्य च वामनेत्रम् ।
श्रीविष्णुमेनं भजतो जनस्य
**शिवः** सदा स्यात्सकलोऽपि कालः ॥ २० ॥

**उषा** ध्रुवं ज्यौतिषशास्त्रविद्भिः,
सर्वेषु कालेषु शुभा निरुक्ता ।
तस्यामिमं संस्मरतां जनानां
का नाम **सिद्धिः** खलु दुर्लभास्ति ॥ २१ ॥

[2]श्रीविष्णुकीर्ति **श्रवणः** सदा यो,
नश्यन्ति पापान्यखिलानि तस्य ।
श्रीरामनामस्मरणाच्च पुंसां,
रोगोऽप्यसाध्यो हि भवेत्सु**साध्यः** ॥ २२ ॥

---

१ भावी (भविष्यति), अतिपातः विघ्न इति छेदः । २ श्रीविष्णुकीर्तेः श्रवणमस्यास्ति तथोक्त इति समासः ।

येषां मतिः स्यात् खलु बोध**निष्ठा**,
हरिस्मृतिर्वा सततं च येषाम् ।
तयोर्द्वयोः कष्टकरो हि पूर्वो,
योगो द्वितीयश्च **शुभः** सुखाप्यः ॥ २३ ॥
विना हिमांशुं **शततारका**पि,
ज्योतिष्मती नैव कदापि रात्रिः ।
जलाद्दते नास्त्यपरश्च **शुक्रः**,
श्रेयस्करः कोऽस्ति तथा तदन्यः ॥ २४ ॥
**पूभा** वमासाद्य यथा पकारो,
ह्रस्वोऽपि दीर्घो विदुषां मतोऽस्ति ।
एवं हरेर्नाम जपन् जनोऽसौ,
**ब्रह्मा**दिपूज्योऽस्त्यपि नीचजातः ॥ २५ ॥
**उभा** वमू यस्य विभूतिषूक्तौ,
स्थिरास्थिराणां च तदात्मकत्वात् ।
हिमालयः स्थावरराज एक-,
स्तथा द्वितीयो गजराज ऐन्द्रः ॥ २६ ॥
यस्यास्ति भार्या विदिता हि रुक्मिणी,
भ्राताग्रजो, यस्य च **रेवती** धवः ।
कृपासमुद्रं वसुदेवनन्दनं,
विहातुमेतं न ममास्ति **वैधृतिः** ॥ २७ ॥
या निर्मिता लक्ष्मणशास्त्रिणा श्री-,
विष्णुस्तुतिः सूर्यनखैर्मितेऽब्दे ।
नक्षत्रयोगाभिधदर्शिकासौ,
प्रमोददात्री विदुषां सदा स्तात् ॥ २८ ॥

इति ।

# श्रीविष्णुचरितामृतस्य शुद्धपत्रम् ।

| पृष्ठे | श्लोके | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २ | १४ | ससुमेरु | स सुमेरु |
| ९ | २२ | भुरवैरी | मुरवैरी |
| २१ | ३० | नसंन्यधाः । | नसं न्यधाः । |
| २२ | ५ | देवज्ञानै | देव ज्ञानै |
| २३ | ५ | चित्तेशिष्टा | चित्ते शिष्टा |
| २४ | २७ | स्त्वंदैतेयो | स्त्वं दैतेयो |
| २६ | ७ | दत्त्वाविश्व | दत्त्वा विश्व |
| २८ | ५ | सुखान्विता । | सुखान्विताः । |
| ३० | २० | सन्चिच्छेद | स चिच्छेद |
| ३१ | ३१ | सर्वांगां | सर्वां गां |
| ३३ | १९ | यकार | चकार |
| ३५ | १० | श्रेष्ठं | प्रेष्ठं |
| ३६ | २७ | न्दरंकरम् । | न्दरं करम् । |
| ३७ | ६ | तयायुताम् । | तया युताम् । |
| ३८ | १९ | द्वयून | ह्यून |
| ४३ | १४ | प्रशासंने । | प्रशासने । |
| ४४ | २६ | संसक्तौ | संसक्तौ |
| ४५ | २८ | प्रशाधिनः । | प्रशाधि नः |
| ४५ | २ | नुसूयो | नसूयो |
| ५८ | १७ | महामीमा | महाभीमा |
| ६० | ४ | चित्त कौतू | चित्तकौतू |
| ६५ | ६ | प्रभीतं | प्रमीतं |
| ७७ | ४ | सत्स्वक्ररः | सत्स्वक्रूरः |
| ८३ | १६ | विशाइवाः । | विशाखा । |

# श्रीविष्णुचरितामृतस्य शुद्धिपत्रम् ।

| पृष्ठ | श्लोक | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २ | १४ | ससुमेरु | स सुमेरु |
| ९ | २२ | भुरवैरी | मुरवैरी |
| २१ | ३० | नसंन्यधाः । | नसं न्यधाः । |
| २२ | ५ | देवज्ञानै | देव ज्ञानै |
| २३ | ५ | चित्तेशिष्टा | चित्ते शिष्टा |
| २४ | २७ | स्त्वंदैतेयो | स्त्वं दैतेयो |
| २६ | ७ | दत्त्वाविश्व | दत्त्वा विश्व |
| २८ | ५ | सुखान्विता । | सुखान्विताः । |
| ३० | २० | सचिच्छेद | स चिच्छेद |
| ३१ | ३१ | सर्वांगां | सर्वां गां |
| ३२ | १९ | यकार | चकार |
| ३५ | १० | श्रेष्ठं | प्रेष्ठं |
| ३६ | २७ | न्दरंकरम् । | न्दरं करम् । |
| ३७ | ६ | तयायुताम् । | तया युताम् । |
| ३८ | १९ | द्वयून | व्यून |
| ४३ | १४ | प्रशासंने । | प्रशासने । |
| ४४ | २६ | संसख्नौ | संसख्नौ |
| ४५ | २८ | प्रशाधिनः । | प्रशाधि नः |
| ४५ | २ | नुसूयो | नसूयो |
| ५८ | १७ | महामीमा | महाभीमा |
| ६० | ४ | चित्त कौतू | चित्तकौतू |
| ६५ | ६ | प्रभीतं | प्रमीतं |
| ७७ | ४ | सत्स्वक्रर: | सत्स्वक्रूरः |
| ८३ | १६ | विशाश्वाः । | विशाखा । |